# मङ्गलाचरणम्

**॥गुरुं प्रणम्य लोकेशं शिशुनामल्पमेधसाम् ।**
**॥धर्मकीर्तिमतं श्रुत्यै तर्कभाषा प्रकाश्यते॥१॥**

# प्रमाणसामान्यलक्षणम्

इह खलु प्रेक्षापूर्वकारिणोऽर्थिजनाः सर्वपुरुषार्थसिद्धिनिमित्तं प्रमाणमनुसरन्तीति प्रमाणमादौ व्युत्पाद्यते । प्रमाणं सम्यग्ज्ञानमपूर्वगोचरम् । प्रमीयतेऽर्थोऽनेनेति प्रमाणम् । तदेव सम्यग्ज्ञानम्, सन्देहविपर्यासदोषरहितत्वात् । अविसंवादकं ज्ञानं लोके सम्यग्ज्ञानमभिधीयते । न च संशयविपर्यासज्ञानयोरविसंवादकत्वमस्ति । यथा स्थाणुर्वा पुरुषो वेति ज्ञानस्य, मरीचिकासु वा जलज्ञानस्य । अपूर्वो गोचरो अस्येत्यपूर्वगोचरम् । गोचरो विषयो घटादिः । तस्मादुत्पन्नं तदर्थप्रापणयोग्यं ज्ञानं प्रमाणम् ॥

# प्रमाणस्य कार्यम्

ननु ज्ञानं कर्तृ पुरुषं प्रयोज्यमर्थ कर्मभूतं यदि कदाचिन्न प्रापयति तत्कथमप्रापकत्वात्प्रमाणं स्यात्? उच्यते । न हि ज्ञानेन पुरुषो गले पादुकान्यायेन बलादर्थे प्रवर्तयितव्यः । अपि त्वेवंभूतमिदं वतुस्वरूपं नान्यथेत्यनेनाकारेण निश्चयो जनयितव्यः । स चेत्तेन कृतः, एतावतैवास्य प्रामाण्यमविरुद्धम् । पुरुषस्तु तत्र प्रयोजनवशात्प्रवर्ततामृते प्रयोजनं न प्रवर्तताम्, अर्थो वा योगिपिशाचादिभिरपह्रियताम् । ज्ञानस्य किमायातम्? ॥ क्षणिकं सन्नपि प्रमाणस्य संगतिः नन्वविसंवादकत्वेन ज्ञानस्य प्रामाण्यम् । अविसंवादकत्वं च दृष्टार्थप्रापणात् । न च यद्दृष्टं तत्प्राप्यते, क्षणिकत्वात्किं च, रूपं दृष्ट, प्राप्यते च स्प्रष्टव्यम् । ततोऽन्यद्दृष्टमन्यत्प्राप्यत इत्यप्रतीतप्रापणात्कथं प्रामाण्यमस्य संगच्छताम् । न, यदि नाम वस्तुतोऽन्यदेव प्राप्यते तथापि दृष्टमेव मया प्राप्तमित्येकत्वाध्यवसायात्प्रतीतप्रापणमभिधीयते । यत्तु मरीचिकादिजलज्ञानं तदप्रापणयोग्यत्वादप्रमाणमेव ॥

# अर्थक्रियास्थितिः

नन्विदं प्रापणयोग्यमिदं नेत्यर्थक्रिया प्राप्तिमन्तरेण निश्चेतुमशक्यम् । ज्ञानोत्पत्तिमात्रेण तु न भ्रान्ताभ्रान्तयोर्भेदोऽवधार्यते । ततश्च कथं तत्सम्यग्ज्ञानमिति चेत्? नैष दोषः । यद्यपि ज्ञानमात्रोदयाद्वैशिष्ट्यमनयोरवधारयितुं न शक्यते, तथापि ज्ञानविशेषोदयाद्ध्यथैकस्य वैशिष्टयं तथोच्यते । तथा हि - यदि नाम मन्दबुद्धिरुत्पत्तिवशादविसंवादकत्वं ज्ञानस्य नावधारयितुं समर्थः, तथापि दाहपाकावगाहनस्नानपानोन्मज्जनाद्ध्यर्थक्रियां दूरतोऽनुभवतो नरस्य दर्शनेनोच्चलद्धूमादिदर्शनेन चावधारयति । अमन्दबुद्धिस्तु पटुतरप्रत्यक्षेणैवावधारयति, न त्वर्थक्रियाप्राप्त्या ।

## यद्यविसंवादलक्षणम्

प्रामाण्यं तदा श्रोत्रज्ञानस्याधिगतार्थाप्रापकत्वात्कथं प्रामाण्यमिनि चेत्? न । अर्थस्वरूपप्रतीतिर्हि प्रामाण्यम् । तच्च बाह्यार्थक्रियाप्राप्तिमन्तरेणापि सम्भवति । यदुक्तम् प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः ।

## अविसंवादनमिति

शब्दस्य श्रुतिमात्रेणैव चरितार्थत्वात्श्रुतिरेव तत्रार्थक्रियास्थितिः । यथा रविचन्द्राम्बुदचित्रादीनां दर्शनमेवार्थक्रियास्थितिः । तदुक्तम् ज्ञेयस्वरूपसंवित्तिरिष्टा तत्र क्रियास्थितिः इति ।

प्रथमं तु प्रेक्षावानर्थक्रियार्थितया जलानलादावर्थक्रियासन्देहादेव प्रवर्तते ।

यदि नाम तस्यैव नास्ति सन्देहो मे वर्तत इति तथापि साधकबाधकप्रमाणाभावाद्युक्तः सन्देहो भवन् केन वार्यते इति । तस्मात् स्थितमेतत्सादितनिरन्तरार्थक्रियाव्यवहारात्पटुतरप्रत्यक्षोदयादेवार्थ प्रवर्तते, मन्दबुद्धिस्तु ताद्रूप्यानुमानादिति ।

अत एव तु प्रत्यक्षस्य स्वतः प्रामाण्यम् । कस्यचित्तु परतः । योगिज्ञानस्य स्वसंवेदनस्य च स्वत एव प्रामाण्यम् । अनुमानस्य तु निश्चयात्मकत्वात्स्वत एव प्रमाण्यम् ।

# अपूर्वगोचरम्

तेनायमर्थः- प्रथमत एव यद्विज्ञानं विषये प्रवृत्तं तदेव प्रमाणम्, न तु तत्रैव पश्चाद्भावि ज्ञानान्तरमपि, गृहितग्राहित्वेन तस्याप्रामाण्यात् । यथा घटं निर्विकल्पकेन ज्ञानेन दृष्ट्वा पश्चात्तस्मिन्नेव विषये घटोऽयमिति सविकल्पकं ज्ञानं स्मरणरूपम्, यथा वा पर्वतादौ धूमं दृष्ट्वा वह्निरत्रेत्यनुमानज्ञानानन्तरं पुनरपि तत्रैव वह्निरत्रेत्यनुमानज्ञानम् ।

# इन्द्रियादेर अप्रमाणम्

सम्यग्ज्ञानं प्रमाणमित्युक्ते सामर्थ्याज्जडस्वभावस्येन्द्रियादेः परिच्छेदकत्वाभावात्प्रामाण्यं निरस्तं परिच्छेदकत्वं हि बोद्धृत्वम् । तच्च ज्ञानस्यैव निजरूपम् । तत्कथमज्ञानात्मन इन्द्रियादेः स्वरूपं भवितुमर्हतीति ॥

# प्रमाणस्य द्वैविध्यम्

प्रत्यक्षशब्दनिर्वचनं च

तद्द्विविधं प्रत्यक्षमनुमानं चेति । प्रतिगतमक्षं प्रत्यक्षम् । अक्षमिन्द्रियं चक्षुः श्रोत्रघ्राणजिह्वाकायाख्यम् । तस्मादुत्पन्नं ज्ञानं प्रत्यक्षमभिधीयते । ननु यद्यक्षाश्रितं ज्ञानं प्रत्यक्षं तदा मानसादि वक्ष्यमाणं ज्ञानत्रयमिन्द्रियादनुत्पत्तेः प्रत्यक्षं न स्यात्? अत्रोच्यते- प्रतिगतमक्षमिति यदुक्तं तत्प्रत्यक्षशब्दस्याव्युत्पत्तिमात्रनिमित्तं प्रतिपादितम् । प्रवृत्तिनिमित्तं तु प्रत्यक्षशब्दसायार्थसाक्षात्कारित्वमेव रुढिवशादवगन्तव्यं पङ्कजवत् । ततः स्वसंवेदनादिकमपि ज्ञानं स्वसंवेदनरूपमर्थ साक्षात्करोतीति प्रत्यक्षशब्दवाच्यं सिद्ध्यतीति ॥

### अनुमानशब्दनिर्वचनम्

मीयतेऽर्थोऽनेनेति मानम् । अनुः पश्चादर्थे । पश्चान्मानमनुमानम् । लिङ्गग्रहणलिङ्गलिङ्गिसम्बन्धस्मरणयोः पश्चात्यद्विज्ञानं पर्वतादौ धर्मिणि परोक्षवस्त्वालम्बकं तदेवानुमानशब्देनाभिधीयते । एतच्च रुढिवशादवगन्तव्यम् ।

### प्रमाणसंख्याविप्रतिपत्तिः

द्विविधवचनेन एकं त्रीणि चत्वारि पञ्च षढिति विप्रतिपत्तयो निरस्यन्ते । तथा हि प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकः । प्रत्यक्षमनुमानं शाब्दं चेति सांख्यः ।

प्रत्यक्षमनुमानमुपमानं शाब्दं चेति नैयायिकः । प्रत्यक्षमनुमानं शाब्दमुपमानमर्थपत्तिरिति प्राभाकरः । प्रत्यक्षमनुमानं शाब्दमुपमानमर्थपत्तिरभावश्चेति मीमांसकः ।

द्विविधवचनेन द्वित्वे प्राप्ते प्रत्यक्षमनुमानं चेति पुनर्यदुक्तं तदन्यथाद्वित्वनिरासार्थम् । तथा हि वैयाक रणो ब्रूते प्रत्यक्षं शाब्दं चेति प्रमाणद्वयम् ॥

### चार्वाकाभिमतानुमानाप्रमाण्यनिरसनम्

तत्र अनुमानस्य प्रामाण्यमवश्यमभ्युपगन्तव्यं चार्वाकेणेति प्रतिपाद्यते । तथा हि - स खलु प्रत्यक्षलक्षणं परप्रतिपादनाय प्रणयति । परस्य च बुद्धिर्न प्रत्यक्षा । किं तर्हि कायवाग्व्यापारादिकार्यादनुमेया । ततोऽनेन कार्यलिङ्गजमनुमानं बलादभ्युपगतं स्यात् । परलोकनिषेधाय चानुपलम्भाख्यं साधनमाचष्टे । अतोऽसौ स्वयमेवानुमानेन प्रमाणेन व्यवहरति, नानुमानं प्रमाणमिति च ब्रुवन् कथं नाम नोन्मत्तश्चार्वाकः स्यात्?

### शब्दोपमानार्थापत्यभावानां प्रमाणान्तरत्वनिरसनम्

शाब्दं च ज्ञानं बाह्यार्थाविसंवादकत्वेन प्रमाणमेष्टव्यम् । अविसंवादकत्वं च सम्बन्धमन्तरेण न संगच्छते । न च शब्दानां बाह्यार्थैन सह कश्चित्सम्बन्धोऽस्ति । तथा हि - शब्दार्थयोः सम्बन्धो भवन् तादात्म्यं तदुत्पत्तिरर्वा भवेत् । तत्र न तावात्तादात्म्यं शब्दार्थयोः, अत्यन्तभेदेन प्रतिभासनात् । तादात्म्यं ह्येकत्वमभिधीयते भिन्नप्रतिभासयोरप्येकत्वे स्वीक्रियमाणे गवाश्वादीनामप्येकत्वप्रसङ्गः । नापि तदुत्पत्तिः । नापि तदुत्पत्तिः, अन्वयव्यतिरेकाभावात् । तस्मात्तदुत्पत्तिरित्येवं वक्तुं न शक्यते । तथा हि - शब्दव्यापारमन्तरेण स्वहेतोरेव मृत्पिण्डदण्डसलिलकुलालचक्रादेः सकाशादुत्पद्यमानो घटादिरर्थो दृश्यते । शब्दोऽपि बाह्यार्थं विनैव पुरुषेच्छामात्रेण ताल्वादिव्यापारादेवोत्पद्यते ।

अथ तादात्म्यतदुत्पत्तिभ्यामन्य एव वाच्यावाचकत्वलक्षणः शब्दार्थयोः वास्तवः सम्बन्धधोऽस्ति । एवं तर्ह्यसंकेतविदोऽपि पुरुषस्य शब्दादुच्चरितान्नियतार्थप्रतीतिः प्राप्ता, योग्यता मात्रेणैव प्रदीपात्घटादिप्रतीतिवत्न चैतदस्ति ।

तथा हि - अभिनवो नालिकेरद्वीपादायातः पुमानग्निशब्दं श्रुत्वाप्यग्निशब्दान्न किञ्चिदर्थं प्रत्येतीति । अथ तांस्तान् संकेतानपेक्ष्य तत्तदर्थप्रत्यायनयोग्य एवायं शब्दो जायत इत्युच्यते । तन्न । न ह्येवमस्य प्रामाण्यमवतिष्ठते । सर्वत्र संकेतस्य योग्यत्वात् । ततो न ज्ञायते किं विवक्षितार्थमाह, आहोस्विदन्यं वेति ।

अस्तु वा अन्य एव कश्चित्सम्बन्धः । तथा च सोऽपि केन सम्बन्धेन तयोः सम्बद्ध इति प्रष्टव्यः । अन्येन चतुर्थेन सम्बन्धेनेति चेत्, चतुर्थोऽपि तेषु केन सम्बन्धेन सम्बद्धः? पञ्चमेन केनचिच्चेत्, सोऽपि केनेत्यनवस्थायामन्त्यासिद्धौ पूर्वेषामप्यसिद्धिः ।

अथासम्बद्ध एव शब्दार्थयोः सम्वन्ध इति चेत् । तन्न । यो न सम्बद्धः स कथं सम्बन्धो भवति घटस्येव पटः । अथ वक्तव्यं सम्बन्धस्य तादृश एव स्वभावः, येन सम्बन्धान्तरनिरपेक्ष एवं परं सम्बध्नाति? तदयुक्तम् । प्रमाणसिद्धे हि स्वभावे नोत्तरमभिधीयते । यथाग्नेरेवायमीदृशः स्वभावो यदुत दाहकत्वं नाम नान्यस्याकाशादेः । सम्बन्धसिद्धौ तु प्रमाणं किञ्चिन्निरुपयन्तो न पश्यामः । न चैवं वक्तव्यं शब्दशक्तिस्वभावादेव शब्दानां नियतार्थाव्यभिचारित्वमिति । तथा हि - यदि घट इत्ययं शब्दः स्वभावादेव कम्बुग्रीवाकारं वारिसंधारणसमर्थं पदार्थमभिदधाति, तत्कथं संकेतान्तरमपेक्ष्य पुरुषेच्छया तुरगादिकमभिदध्यात् । न हि शालिबीजं स्वहेतोरङ्कुरजननस्वभावमुत्पन्नं संकेतान्तमपेक्ष्य गर्दभं जनयितुं समर्थं स्यात् । नाप्याप्तप्रणीतशब्दानां प्रामाण्यमभिधातुमुचितम् । आप्तत्वस्यैव निश्चेतुमशक्यत्वात् । तथा हि - आप्तत्वं क्षिणदोषत्वमुच्यते । क्षीणदोषता च परचित्तवृत्तिः काचिदभिधीयते । परचित्तवृत्तीनां दुर्लक्ष्यत्वात्, कायवाग्व्यापारादिकार्यलिङ्गस्यान्यथापि वृत्तिदर्शनात् । सरागा अपि वीतरागा इव चेष्टन्त इति न्यायात्कथमाप्तत्वं निश्चीयतामिति । सम्वन्धदूषणेन च वैदिकशब्दानां प्रामाण्यं निरस्तमिति पृथङ्नोक्तम् । कथं तर्हि सर्वोऽयमसन्दिग्धो लौकिको व्यवहार इति चेत् । तथा तथा संकेतेन विवक्षावशादिति न काचित्क्षतिः । यथोक्तम्ऽवक्तुरभिप्रायं सूचयेयुः शब्दा इति ॥

## नैयायिकसम्मतस्योपमानप्रमाणस्य निरसनम्

नैयायिकस्योपमानप्रपञ्चः । यः प्रतिपत्ता गां जानाति न गवयम्, स च अपदिष्टः स्वामिना अरण्यं गत्वा गवयमानयेति । स च गवयशब्दवाच्यमर्थमजानानो वनेचरमन्यं तज्ज्ञं पुरुषं पृष्टवान्, कीदृशो गवय इति । स चाह यादृशी गौस्तादृशो गवय इति । तस्यारण्यगतस्य प्रेष्यपुरुषस्य अतिदेश वाक्यार्थस्मरणसहकारि गवयसारूप्यज्ञानं कर्तृ अयमसौ गवयशब्दवाच्योऽर्थ इति प्रतिपत्तिं फलस्वरूपां जनयत्प्रमाणम् । एतच्चायुक्तम् । यत्प्रामाण्यं नाम विषयवत्तयां व्याप्तम् । न चास्य निपुणमपि निरुपयन्तो विषयं संपश्यामः । तथा हि - समाख्या नाम सम्बन्धः तस्य विषयो वर्ण्यते । स च परमार्थतो नास्ति । दृश्यत्वे तस्यानुपलम्भेन बाधा । अदृश्यत्वे तस्य सत्तासाधकं प्रमाणं नेक्ष्यते । किं च - स हि सम्बन्धः सम्बधिभ्यां भिन्नोऽभिन्नो वा । यदा भिन्नस्तदा तयोः सम्बन्धः केन सम्बन्धेनेति वाच्यम् ।

सम्बन्धान्तरकल्पनायामनवस्था । अथाभिन्नस्तदा सम्बन्धिनावेव केवलौ । न समाख्या नाम सम्बन्धः कश्चित् । अथ सम्बद्धबुद्धिजनकत्वं सम्बन्धः । तन्न युक्तम् । यतः सम्बद्धावेताविति बुद्धिः स्वहेतुबलात्सम्बद्धवस्तुद्वयादपि सम्भाव्यमाना न सम्बन्धान्तरमाक्षिप्तुं प्रभवति ॥

## मीमांसकसम्मतस्योपमानप्रमाणस्य निरसनम्

एवं मीमांसकोपवर्णितस्यापि प्रामाण्यं निराकर्तव्यम् । तथा हि, सादृश्यविशिष्टः पिण्डः पिण्डविशिष्टं वा सादृश्यमुपमानस्य विषयस्तेन वर्ण्यते । न च सदृशवस्तुनोऽतिरिक्तं सादृश्यं व्यवस्थापयितुं शक्यते, प्रमाणेनाप्रतीतत्वात् । तथा हि - यदि सदृशादतिरिक्तं सादृश्यं दृश्यं स्यात्तदा दृश्यानुलम्भग्रस्तमेतत् । अथादृश्यं तदा तत्प्रतिबद्धलिङ्गाभावातनुमानादपि कथं तत्सिद्धिः । सादृश्यप्रत्ययस्तु स्वहेतोस्तथोत्पन्नेन सदृशवस्तुनापि क्रियमाणो घटत इति न तत्प्रत्ययादपि तत्सिद्धिर्युक्ता । उपमानादेव सादृश्यसिद्धिरिति चेत्? न । यतः प्रमाणान्तरसिद्धयोरेव सादृश्यपिण्डओयोर्यो विशेषणविषेष्यभावस्तस्योपमानविषयत्वं तेन वादिना परिकल्द्धप्यते । तत्कथं सादृश्यमात्रस्याप्युपमानात्सिद्धिरिति ॥

## अर्थापत्तिप्रमाणनिरसनम्

अर्थापत्तेरपि प्रामाण्यं पृथङ्नोपपद्यते । तथा हि प्रत्यक्षादिप्रतीतो योऽर्थः स येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिरित्यर्थापत्तेर्लक्षणम् । अत्रेदं चिन्त्यते - योऽसौ प्रमाणदृष्टोऽर्थः, तस्य यदि परिकल्प्यमानेन परोक्षार्थेन सह कश्चित्तादाम्यलक्षणः तदुत्पत्तिलक्षणो व प्रतिबन्धोऽस्ति तदा स्वभावलिङ्गजा कार्यलिङ्गजा वासौ प्रतिपत्तिरित्यर्थापत्तिरनुमानमेव । अथ नास्ति प्रतिबन्धः, तदानीमर्थापत्तिः प्रमाणमेव न भवति, असम्बन्धात्घटात्पटप्रतीतिवदिति ॥

## अभावप्रमाणनिरसनम्

अभावस्य स्वरूपमेव तावन्नोपलभामहे, कुत एव तस्य प्रामाण्यं भविष्यति । तथा हि -प्रत्यक्षादिप्रमाणानामनुत्पत्तिरभावाख्यं प्रमाणं मीमांसकैरभिधीयते । तत्र केयमनुत्पत्तिः? किं प्रसज्यवृत्या प्रमाणानुत्पत्तिमात्रम्? अथ पर्युदासवृत्या वस्त्वन्तरम्? वस्त्वन्तरमपि जडरूपं, ज्ञानरूपं वा? ज्ञानमपि किं ज्ञानमात्रमेकज्ञानसंसर्गिवस्तुनो ज्ञानं वा? तत्र न तावत्प्रसज्यरूपोऽभावो युज्यते । तस्य सर्वशक्तिशून्यत्वात्परिच्छेदकत्वं वा कथं भवेत्? अत एव केनापि न तत्प्रतिद्यते । यदाह पण्डितचक्रचूडामणिः- नाभावः कस्यचित्प्रतिपत्तिः प्रतिपत्तिहेतुर्वा ।

तस्यापि कथं प्रतिपत्तिः इति ।

नापि जडरूपम्, जडस्य परिच्छेदकत्वाभावात् । न हि जडरूपं शकटादिकं घटं परिच्छिनत्तीति क्वापि दृष्टं श्रुतं वेति । नापि ज्ञानमात्रम्, देशकालस्वभावविप्रकृष्टस्यापि सुमेरुशंखचक्रवर्तिपिशाचादेरपि ज्ञानमात्रादभावप्रमाणादभावप्रसङ्गात् । अथैकज्ञानसंसर्गिभूतलादिवस्तुज्ञानमभावोऽभिधीयते तदा प्रत्यक्षविशेषस्यैवाभावप्रमाणनामक रणान्नास्माकं काचिद्विप्रतिपत्तिरिति । स्थितमेतत्- प्रत्यक्षमनुमानं चेत द्विविधमेव प्रमाणमिति ॥

## प्रत्यक्षलक्षणम्

तत्र प्रत्यक्षं कल्पनापोढमभ्रान्तम् । पूर्वोपरमनुसन्धाय शब्दसङ्कीर्णाकारा प्रतीतिर्जल्पाकारा वा कल्पना । यथा विज्ञपुरुषस्य सोऽयं घट इति प्रतीतिः । बालमूकतिर्यगादीनामन्तर्जल्पाकारा परामर्शरूपा वा प्रतीतिः । तथा चोक्तम् - अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना ॥ इति ॥

ननु बालमूकादीनामन्तर्जल्पाकारं कल्पनाज्ञानमस्तीति कुतो निश्चेतव्यमिति चेत, विकल्पकार्यादिष्टापादानपरिहारात् । दृष्टं चेदं कार्य बालमूकादौ, ईप्तिसतार्थस्वीकरणमनीप्सितार्थत्यजनं नाम । बालमूकादिविज्ञानस्य कल्पनात्व सूचनेन भत्तोक्तालोचनाज्ञानं सविकल्पकमिति प्रतिपादितं भवति । किं पुनः कारणं कल्पनाविभ्रमात्मकं च ज्ञानं प्रत्यक्षं न स्यादिति चेत? न । अर्थस्वरूपसाक्षाकारि हि ज्ञानं प्रत्यक्षमिति सर्वोषां प्रसिद्धम् । न च कल्पनाविभ्रमावर्थरूपं साक्षात्कर्तु समर्थौ । तथा हि - अर्थग्राहकं ज्ञानमर्थस्य कार्यम् । अर्थो हि ग्राह्यत्वात्ज्ञानस्य कारणम् । यथोक्तम् -

भिन्नकालं कथं ग्राह्यमिति चेत्ग्राह्यतां विदुः ।

हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥ इति ॥

कल्पनाज्ञानमर्थमन्तरेण वासनामात्रादेवोपजायमानं कथमर्थस्य कार्यं स्यात्, अर्थेन सह अन्वयव्यतिरेकाभावात् । न हि यदन्तरेणापि यद्भवति तत्तस्य कार्यम्, अतिप्रसङ्गात् । यदि पुनः कल्पनाज्ञानमर्थादुपजायेत, तेनापि तदा घटादिरर्थो दृश्येत । ततश्चान्धस्यापि रूपदर्शनप्रसङ्गः, न चास्ति । अत एवोक्तम् -

शाब्द्यां बुद्धावर्थस्य प्रत्यक्ष इव प्रतिभासाभावाद्नास्ति कल्पनाया अर्थसाक्षात्कारित्वमिति ॥ एतेन यदुक्तं परेणः

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ॥

तन्निरस्तम् । तथाहि - घटे पुरोवर्तिनि उच्चार्यमाणे तत्समीपवर्ति भूतलादिज्ञानमुच्चारणरहितमनुभूयत एव । न च तथा तत्र शब्दानुगतोऽस्ति । न च विकल्पद्वयं सकृदिति न्यायात् ॥

### भ्रान्तज्ञानम्

भ्रान्तमपि ज्ञानं नार्थसाक्षात्कारि । भ्रान्तं ह्यर्थक्रियासमर्थए वस्तुनि विपर्यस्तमुच्यते । अर्थक्रियाक्षमं च वस्तुस्वरूपं देशकालाकारनियतं, तत्कथं विपरीतप्रतिभासिना भ्रान्तेन ज्ञानेन साक्षात्क्रियते । यदाह आचार्यः-ऽतिमिराशुभ्रमणनौयानसंक्षोभाद्यनाहितविभ्रमं ज्ञानं प्रत्यक्षम्ऽ ॥ इति ॥

एतेन कामलिनः शुक्ले शंखे पीतप्रतिभासि ज्ञानं, भ्रमादलातादौ चक्रादिनिर्भासि ज्ञानं, गच्छन्त्यां नावि स्थितस्य चलदवृक्षादिभ्रान्तिज्ञानं, गाढमर्मप्रहारहतस्य ज्वलत्स्तम्भादिप्रतिभासि ज्ञानं च, न प्रत्यक्षमित्युक्तं भवति ।

ननु यदि नाम तज्ज्ञानं न प्रत्यक्षं कथं ततो वस्तुप्राप्तिरिति चेत्? न ततो वस्तुप्राप्तिः । किं तर्हि, ज्ञानान्तरादेवेति केचित् ।

### प्रत्यक्षस्य चातुर्विध्यम्

तच्चतुर्विधं- इन्द्रियज्ञानं मानसं स्वसंदनं योगिज्ञानं चेति ।

**इन्द्रियप्रत्यक्षम्**

चक्षुरादीन्द्रियपञ्चकाश्रयेणोत्पद्यमानं बाह्यरूपादिपञ्चविषयालम्बनमिन्द्रियप्रत्यक्षम् । तत्र चक्षुर्विज्ञानं रूपविषयम् । श्रोत्रविज्ञानं च शब्दविषयम् । घ्राणविज्ञानं गन्धविषयम् । जिह्वाविज्ञानं रसविषयम् । कायविज्ञानं स्पर्शविषयम् ।

**इन्द्रियप्रत्यक्षस्य व्यपदेशः**

इन्द्रियप्रत्यक्षमिति व्यपदेशस्यासाधारणकारणत्वं निमित्तम् । यथा भेरीशब्दो यवाङ्कर इति । इदं च प्रत्यक्षं यत्रैव स्वानुरूपं विकल्पं जनयति तत्रैव प्रमाणम्, सांव्यावहारिक प्रमाणाधिकारादिति ॥

**मानसप्रत्यक्षम्**

स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं मनोविज्ञानं मानसम् । स्वशब्देनेन्द्रियज्ञानमभिमतम्, स्वस्य विषयो बाह्यो घटादिः, स्वविषयस्यानन्तरः, स्वविषयानन्तरः इन्द्रियज्ञानविषयादन्यो घटादिर्द्वितीयक्षणः । तेन सहकारिणा सह मिलित्वा, इन्द्रियज्ञानेनोपादानेन समनन्तरप्रत्ययसंज्ञकेन यज्जनितं तन्मानसं प्रत्यक्षमुच्यते । ततो यदुक्तं परेणात्रःऽगृहीतग्राहित्वमन्धबधिराद्यभावो योगिज्ञानस्यापि मानसत्वप्रसङ्गः अव्यवहारित्वं चऽ इति । तन्निरस्तम् । तथा हि - द्वितीयक्षणग्रहणात्गृहीतग्राहित्वस्य निरासः । इन्द्रियज्ञानजनितं हि मानसम् । अन्धादीनां रूपादिविषयालम्बनकमिन्द्रियज्ञानमेव नास्ति, कुतस्तज्जनितं मानसं भविष्यति? अतो नास्त्यन्धबधिराद्यभावदोषः । समनन्तरप्रत्ययविशेषणेन योगिज्ञानस्य मानसप्रत्यक्षप्रसङ्गो निरस्तः । समनन्तरप्रत्ययशब्दः स्वसन्तानवर्तिन्युपादानज्ञाने रुढ्या प्रसिद्धः । ततो भिन्नसन्तानवर्तियोगिज्ञानमपेक्ष्य पृथग्जनचित्तानां समनन्तरप्रत्ययव्यपदेशो नास्तीति । अव्यवहारित्वं पुनरस्य दूषणं नोपपद्यते, सूक्ष्मकालभावित्वेन पृथग्जनैर्दुर्लक्ष्यत्वात् । व्यवहाराङ्गेत्वेन चानभ्युपगमात् । आगमप्रसिद्धं हि मानसप्रत्यक्षम् । न त्वस्य निश्चायकं किञ्चिदस्ति । यथोक्तं भगवता-

’द्वाभ्यां भिक्षवो रूपं गृह्यते, चक्षुषा तदाकृष्टेनमनसा चऽ इति ॥

ननु च व्यवहारानुपयुक्तमुपदर्शयितुं किं प्रयोजनम्, ईदृग्लक्षणयुक्तं यदि मानसं प्रत्यक्षं स्यात्, न कश्चिद्दोषः स्यादित्यागमस्यापि विशुद्धिरनेन प्रतिपादितेति प्रयोजनम् ॥

**स्वसंवेदनप्रत्यक्षम्**

चित्तचैत्तानां स्वसंवेदनत्वसमर्थनम्

सर्वचित्तचैत्तानामात्मसंवेदनं स्वसंवेदनम् । चित्तं वस्तुमात्रग्राहकं ज्ञानम् । चित्ते भावाः चैत्ताः, वस्तुनो विशेषरूपग्राहका सुखदुःखोपक्षालक्षणाः । तेषां सर्वचित्तचैत्तानामात्मा संविद्यते येन रूपेण तत्स्वरूपमात्मस्वरूपसाक्षत्कारित्वात्स्वसंवेदनं प्रत्यक्षं कल्पनापोढमभ्रान्तं चोच्यते ।

अत्र केचिदाहुः - न च चित्तचैत्तानां स्वसंवेदनं घटते, स्वात्मनि क्रियाविरोधात् । न च सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारोढुं शक्नोति । न हि तीक्ष्णाप्यसिधारा स्वमात्मानं छिनत्ति । न हि प्रज्ज्वलितोऽपि वह्निस्कन्ध आत्मानं दहति । तथा चित्तचैत्तमपि कथमात्मानं वेदयतु वेद्यवेदकभावो हि कर्मकर्तृभावः ।

कर्मकर्तृत्वं च लोके भेदेनैव प्रसिद्धम्, वृक्षसूत्रधारयोरिव । अत्रोच्यते, न कर्मकर्तृभावेन वेद्यवेदकत्वं ज्ञाने वर्ण्यते । किं तर्हि? व्यवस्थाप्यव्यवस्थापकभावेन ।

यथा प्रदिप आत्मानं प्रकाशयति तथा ज्ञानमपि जडपदार्थविलक्षणं स्वहेतोरेव प्रकाशस्वभावमुपजायमानं स्वसंवेदनं व्यवस्थाप्यते । तथा चोक्तम् -

विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते । इयमेवात्मसंवित्तिरस्य याजडरूपता ॥ इति ॥

अलङ्कारकारेणाप्युक्तम् -

कल्पितः कर्मकर्त्रादिः परमार्थो न विद्यते । आत्मानमात्मनैवात्मा निहन्तीति निरुच्यते ॥ इति ॥

न च चित्तचैत्तानां ज्ञानान्तरेण प्रकाश्यत्वं युज्यते । तथा हि - न तावत्समानकालभाविना ज्ञानान्तरेण चित्तचैत्तं प्रकाश्यत इति घटते, उपकार्योपकारकत्वाभावात्, सव्येतरगोविषाणयोरिव । नापि भिन्नकालभाविना, क्षणिकत्वात्, प्रकाशितव्यस्यैवाभावात् । अपि च यदि ज्ञानं स्वसंवेदनं न स्यात्, तदा ज्ञातोऽर्थो इति दुर्घटः स्यात्,ऽनागृहीतविशेषणा बुद्धिर्विशेष्ये वर्त्ततेऽ इति न्यायात् । तथा हि - अर्थो विशेष्यः, ज्ञात

इति विशेषणम्, ज्ञातो ज्ञानेन विशेषित इति । ज्ञानं चेत्स्वयं न बोधरूपेण प्रतीतं, तत्कथं ज्ञानेन विशेषितोऽर्थः प्रतीयताम् । न हि दण्डाग्रहणे दण्डिनो ग्रहणं युक्तिसङ्गतम् । यच्चोक्तं त्रिलोचनेन -

चक्षुषोऽग्रहणेऽपि चाक्षुषं रूपं प्रतीयते, तथा ज्ञानानवबोधेऽपि ज्ञातोऽर्थ इति घटिष्यते ॥ इति ॥

तदसाधु । प्रस्तुतेऽनुपयोगात् । न हि चक्षू रूपस्य विशेषणम् । किं तर्हि? चक्षुर्विज्ञानासंवेदने कथं ज्ञायतामिति चोद्यमक्षतमेव ॥

यत्पुनर्ज्ञानस्य परोक्षत्वप्रतिपादनाय भट्टेनोक्तम् -

यथा च रूपादिप्रकाशन्यथानुपपत्या इन्द्रियसिद्धिः, तथा ज्ञानस्यापि सिद्धिरिति ।

तथा हि तत्र भाष्यम् -

न हि कश्चिदज्ञातेऽर्थे बुद्धिमुपलभते । ज्ञाते त्वनुमानादवगच्छति इति ॥

वार्तिकं च -

तस्य ज्ञानं तु ज्ञाततावशात् । इति ।

ज्ञातता च विषयप्राकट्यमुच्यते । तदपि चायुक्तम् । प्राकट्यस्यापि ज्ञानात्पृथक्त्वे विषयरूपतायां व्यक्तौ जडरूपता, जडस्य प्रकाशायोगात् । विषयादर्थान्तरत्वे जडतायां तस्यापि स्वतः प्रकाशायोगात् । प्राकटयान्तरेण नु प्रकाशनेऽनवस्था स्यात् । ज्ञानस्वभावत्वे प्राकटयस्यापि परोक्षत्वप्रसङ्गः । ततोऽवश्यं ज्ञानस्य स्वसंवेदनत्वमभिधेयम् । अनुभवप्रसिद्धं च स्वसंवेदनत्व कथमपह्नुयेत? तदुक्तम् - अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति । इति ।

अलङ्कारकारोऽप्याह -

परोक्षं यदि तत्ज्ञानं ज्ञातमित्येव तत्कुतः । परोक्षस्य स्वरूपं कस्तस्य लक्षयितुं क्षमः ॥ इति ॥

ननु सर्वज्ञानानां स्वसंवेदनप्रत्यक्षत्वे घटोऽयमित्यादिविकल्पज्ञानस्य निर्विकल्पकत्वं, पीतशङ्खादिज्ञानस्याभ्रान्तत्वं च कथं न भवेत्? उच्यते - विकल्पज्ञानमपि स्वात्मनि निर्विकल्पमेव । घटोऽयमित्यनेन बाह्यमेवार्थं विकल्पयति, न त्वात्मानम् । तदुक्तम् -

शब्दार्थग्राहि यद्यत्र ज्ञानं तत्तत्र कल्पना । स्वरूपं च न शब्दार्थस्तत्राध्यक्षमतोऽखिलम् ॥ इति ॥

भ्रान्तमप्यात्मन्यभ्रान्तं स्वप्रकाशरूपेणैवावभासनात् । असद्विषयत्वाच्च भ्रान्तिरुच्यते । तदुक्तम् - स्वरूपे सर्वमभ्रान्तं पररूपे विपर्ययः । इति ॥

तस्मादन्यथा प्रकाशासिद्धेः यद्यमी प्रकाशन्ते, तदा स्वहेतोरेव प्रकाशस्वभावादुत्पन्नाः सन्तः प्रकाशन्त इति स्वीकर्तव्यम् ॥

**योगिप्रत्यक्षनिरूपणम्**

भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं चेति । योगः समाधिः, चित्तैकाग्रतालक्षणः । निश्शेषवस्तुतत्वविवेचिका प्रज्ञा । योगोऽस्यास्तीति योगी । योगिनो यत्ज्ञानं तत्प्रत्यक्षम् । कीदृशं तदिति चेत्? भूतार्थभावनाप्रकर्षपर्यन्तजम् । भूतार्थः प्रमाणोपपन्नार्थः । भावना पुनः पुनश्चेतसि समारोपः । भूतार्थभावनाप्रकर्षपर्यन्ताज्जातं यद्विज्ञानं तत्कल्पनापोढभ्रान्तम् । भूतार्थश्चतुरार्यसत्य दुःखसमुदयनिरोधमार्गसंज्ञकम्, पञ्चस्कन्धस्वभावं क्षणिकशून्यनिरात्मकदुःखादिरूपतया प्रतिपत्तव्यम् । यत्सत्तत्क्षणिकमित्याद्यनुमानेन प्रमाणोपपन्नमुपगन्तव्यमिति ॥

ननु भावना विकल्पः, विकल्पश्चावस्तुविषयः, तत्कथं वस्तुनः स्फुटीभावो भवतु ।कथं वा विकल्पो निर्विकल्पतां व्रजेत्? क्षणिकं च चितं कथमेकाग्रीभवति? विशेषश्च कस्य केन वा क्रियताम्? शरीरी च रागादिविरहान्मुक्तश्चेति सर्वमसंगतम् । अत्रोच्यते - अवस्तुविषयोऽपि विकल्पो वस्त्वध्यवस्यतीति भावनातो वस्तुन एवात्र स्फुटीभावः । न च विकल्प एव निर्विकल्पकः, किं तु विकल्पान्निर्विकल्पकस्योदयः । अनुभवसिद्धं चैतत्भावयतां निर्विकल्पकप्रतिभासनं, कामशोकादिवत् । न हि दृष्टे किञ्चिदनुपपन्नं नाम । क्षणिकमपि चित्तं सजातीयक्षणेषु ग्रहणप्रवीणत्वातेकाग्रमुच्यते । क्षणिकत्वनैव विशेषोत्पत्तिः, न तु नित्यत्वेन, नित्यस्यानाधेयातिशयत्वात्यदुक्तम् -

नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति । तस्य शक्तिरशक्तिर्वा या स्वभावेन संस्थिता । नित्यवादपि किं तस्य कस्तां क्षपयितुं क्षमः ॥ इति ॥

यत्तु शरीरित्वे सुखदुःखयोर्भावादनुग्रहनिग्रहात्शरीरी रागादिविरहान्मुक्त श्चेति विघटनमुक्तं, तदयुक्तम् । न हि शरीरं रागादिहेतुः, किं तु अविद्या । अनित्ये नित्यमिति, अनात्मन्यात्मेति, दुःखे सुखमिति, अशुचौ शुचितेति, चतुर्विपयासस्वभावा मिथ्योपलब्धिः । अत एव विषयसुखतृष्णा स्यात् । आत्मानं नित्यं पश्यत एव सुखाभिकाङ्क्षणादिसुखहेतुरात्मीयः स्यात् । एषु चाऽसङ्गो रागः । एतत्प्रतिबन्धाश्च द्वेषादयः । तस्मादविद्यैव मूलं रागादेर्न तु शरीरम् । सत्यपि शरीरे यद्यविद्या न स्यात्, कुत एव रागादियोगाः? तस्माज्जीवच्छरीरे सत्यपि अविद्याविरहात्सर्वसङ्गविरहलक्षणा मुक्तिर्वीतरागाणां भवतीति सर्वं सुस्थितम् ।

## प्रत्यक्षस्य स्वलक्षणाविषयत्वसमर्थनम्

तस्य विषयः स्वलक्षणम् । तस्य चतुर्विधस्य प्रत्यक्षस्य स्वलक्षणं विषयो बोद्धव्यः । स्वलक्षणमित्यसाधारणं वस्तुस्वरूपं देशकालाकारनियतम् । एतेनैतदुक्तं भवति- घटादिरुदकाद्याहरणसमर्थो देशकालाकारनियतः पुरः प्रकाशमानोऽनित्यत्वाद्यनेकधर्मान्तरोदासीनः प्रवृत्तिविषयः सजातीयविजातीयव्यावृत्तः स्वलक्षणमित्यर्थः ।

अयोगान्योगव्यवच्छेदयोः भेदः

ननु यदि स्वलक्षणमेव प्रत्यक्षस्य विषयो न सामान्यं तदानीं धूमदहनसामान्ययोर्व्याप्तिः कथं प्रत्यक्षेण गृह्यताम्? नायं दोषः । यतोऽयोगव्यवच्छेदेन स्वलक्षणं तस्य विषय एव, न त्वन्ययोगव्यवच्छेदेन स्वलक्षणमेव तस्य विषय इति । किं तर्हि, सामान्यमप्यस्य विषयः ।

## प्रमाण फल व्यवस्था

द्विविधो हि प्रमाणस्य विषयः ग्राह्योऽध्यवसेयश्च । तत्र प्रत्यक्षस्य प्रतिभासमानं स्वलक्षणमेको ग्राह्यः । अध्यवसेयस्तु प्रत्यक्षपृष्ठभाविनो विकल्पस्य प्रतिभासमानं सामान्यमेव । तच्च सामान्यं द्विविधम्, ऊर्ध्वतालक्षणं तिर्यग्लक्षणं चेति । तत्रैकस्यामेव घटादिव्यक्तौ सजातीयव्यावृत्तायामनेकक्षणसमुदायः सामान्यमूर्ध्वतालक्षणं साधनप्रत्यक्षस्य विषयः । विजातीयव्यावृत्तास्त्वनेकव्यक्तयः तिर्यक्सामान्यं व्याप्तिग्राहकप्रत्यक्षस्य विषयः । अनुमानस्य तु सामान्यं ग्राह्यं, अध्यवसेयस्तु स्वलक्षणमेव । प्रत्यक्षस्य स्वलक्षणविषयप्रतिपादने परोक्ताः षट्पदार्था न विषया इत्युक्तं यथा - अवयविद्रव्यं, गुणः, कर्म, सामान्यं, विशेषः, समवायश्चेति । न चैषां प्रत्यक्षे ज्ञाने प्रतिभासोऽस्ति । न चाप्रतिभासमानो विषयो युज्यते, अतिप्रसङ्गात् । तथा हि - घटादौ परिदृश्यमाने पूर्वापरादिभागं विहाय नान्यत्किञ्चिदेकमवयविद्रव्यमुपलभामहे । यदाह न्यायपरमेश्वरः -

भागा एव हि भासन्ते सन्निविष्टास्तथा तथा । तद्वान्नैव पुनः कश्चिद्विभागः सम्प्रतीयते ॥ इति ॥

एवं गुणकर्मादीनां च दुषणं प्रत्येतब्यम् ॥

### प्रमाणफलावबोधः

ननु प्रमितिरूपां क्रियां फलभूतां निष्पादयज्ज्ञानं प्रमाणमिति प्रसिद्धम् । तत्र कासौ प्रमितिः, यां जनज्ज्ञानं प्रमाणमिति चेत्? उच्यते - इह नीलादेरर्थात्ज्ञानं द्विरूपमुत्पद्यते नीलाकारं, नीलबोधस्वभावं च । तत्रानीलाकारव्यावृत्या नीलाकारं ज्ञानं प्रमाणम् । अनीलबोधव्यावृत्या नीलबोधरूपं प्रमितिः । सैव फलम् । यथोक्तम् -

अर्थसारूप्यमस्य प्रमाणम्, अर्थाधिगतिः प्रमाणफलम् । इति ॥

एतच्च विकल्पप्रत्ययेन भिन्नं व्यवस्थाप्यते परमार्थतस्तु नास्त्येव भेदः । यथोक्तम् -

तदेव प्रत्यक्षं ज्ञानं प्रमाणफलम् । इति ॥

## प्रमाणतत्फलयोरभेदः

साकारं चेदं ज्ञानमेष्टव्यम् । यदि पुनः साकारं ज्ञानं नेष्यते, तदानाकारत्वेन सर्वत्र विषये तुल्यत्वात्विभागेन विषयव्यवस्था न सिध्यति । यत्पुनः केचिदाहुः - पूर्वं ज्ञानं प्रमाणमुत्तरं ज्ञानं प्रमाणफलमिति, तन्न युक्तम् । तथा हि प्रथमक्षणभावि तावज्ज्ञानं प्रमाणफलभूतस्य द्वितीयज्ञानस्यानुत्पत्तेः,फलभूतज्ञानोत्पत्तौ च पूर्वस्य क्षणिकत्वेन विनाशात्कथं घटादिविषयं ज्ञानं प्रमाणं भवति? नापि समानकालभावि ज्ञानं फलमुचितम्, उपकार्योपकारकत्वाभावात्, सव्येतरगोविषाणयोरिव । [तस्मात्परमार्थतः प्रमाणफलयोर्नास्ति भेदः । काल्पनिकस्तु व्यावृत्तिकृतो भेदः विकल्पबुद्धौ व्यवस्थाप्यते] ॥

इति तर्कभाषायां प्रत्यक्षपरिच्छेदः प्रथमः समाप्तः ॥

# स्वार्थानुमानम्

अनुमानस्य द्वैविध्यं स्वार्थानुमानलक्षणम्

अनुमानं द्विविधम् - स्वार्थं परार्थं च । स्वस्मै यत्तत्स्वार्थमनुमानं ज्ञानात्मकम् । पर्वतादौ धर्मिणि धूमादिकं दृष्ट्वा यस्य प्रतिपत्तुः वह्निज्ञानमुत्पद्यते, स एव तेन ज्ञानेन परोक्षमर्थं प्रतिपद्यते नान्य इति स्वार्थानुमानमुच्यते । परस्मै यत्तत्परार्थम् । परार्थानुमानं वचनात्मकम् । त्रिरूपलिङ्गप्रतिपादकं वचनं परं प्रतिपादयति ज्ञापयतीति कृत्वा वचनमप्यनुमानशब्देनोच्यते, उपचारात्, यथा आयुर्घृतमिति ।

### अनुमानस्य कार्यम्

तत्र स्वार्थं त्रिरूपलिङ्गाद्यदनुमेये ज्ञानम् । रूपत्रययुक्ताल्लिङ्गादनुमेये परोक्षविषये यद्ज्ञानं र्पतिपत्तुरुत्पद्यते, तत्स्वार्थानुमानम् । तच्च धर्मविशेष सम्बन्धितया साध्याविनाभावित्वनिश्चय इत्येके ।

अग्न्यध्यवसाय इत्यन्ये ।

# लिङ्गस्य त्रिरूपत्वम्

सम्प्रति लिङ्गस्य त्रिरूपत्वमुच्यते - अनुमेये सत्वमेव निश्चितम् । अनुमेये पर्वतादौ धर्मिणि लिङ्गस्यास्तित्वमेव निश्चितं, तदेकं रूपं पक्षधर्मतासंज्ञकम् । अत्र सत्त्वग्रहणेनासिद्धस्य निरासः, यथा - अनित्यश्शब्दश्चाक्षुषत्वात्, चाक्षुषत्वं चक्षुर्विज्ञानग्राह्यत्वमुच्यते, तच्च शब्दे धर्मिणि नास्ति । एवकारेण पक्षैकदेशासिद्धस्य निरासः, यथा दिगम्बरप्रयोगः - चेतनास्तरवः स्वापात् । पत्रसङ्कोचलक्षणो हि स्वापः, स च सर्वेषु तरुष्वसिद्धः । निश्चितग्रहणेन सन्दिग्धासिद्धस्य निरासः, यथा - अग्निरत्र वाष्पादित्वेन सन्दिह्यमानाद्भूतसंघातात् । सत्वशब्दात्पश्चादेवकारेण असाधारणस्य निरासः, यथा- अनित्यश्शब्दः श्रावणत्वात्घटवत् ॥

### सपक्षनिरूपणम्

सपक्ष एव सत्त्वं निश्चितमिति वर्तते । समानः पक्षः सपक्षः । पक्षेण सह सदृशो दृष्टान्तधर्मीत्यर्थः । सपक्ष एव सत्वं निश्चितमित्यन्वयसंज्ञकं द्वितीयं रूपम् । अत्र सत्त्वग्रहणेन विरुद्धस्य निरासः, यथा - शब्दो नित्यः कृतकत्वात्घटवत् । कृतकत्व हि नित्यत्वविपक्षेणानित्यत्वेन व्याप्तमिति विरुद्धमुच्यते । एवकारेण साधारणस्य निरासः, यथा - नित्यश्शब्दः प्रमेयत्वात्घटवत् । प्रमेयत्वं हि विकल्पविषयीकृतत्वम्, तच्च सपक्षे आकाशादौ विपक्षे च घटादौ सर्वत्रास्तीति साधारणमुच्यते । सत्त्वशब्दात्पूर्वस्मिन्नेवकारेण सर्वसपक्षाव्यापिनोऽपि प्रयत्नानन्तरीयकस्य हेतुत्वं कथितम् । यथा - अनित्यश्शब्दः प्रयत्नानन्तरीयकत्वाद्घटवद्विद्युद्वत् । निश्चितग्रहणेन सन्दिग्धान्वयस्य निरासः, यथा - असर्वज्ञोऽयं कश्चित्वक्तृत्वादिष्टपुरु षवत् । इष्टपुरुषे सपक्षे च वक्तृत्वमसर्वज्ञत्वेन व्याप्तमव्याप्तं वा न ज्ञायते ॥

### विपक्षनिरूपणम्

असपक्षे चासत्त्वमेव निश्चितम् । न सपक्षोऽसपक्षः । तत्रासत्त्वमेव निश्चितं व्यतिरेकसंज्ञकं तृतीयं रूपम् । अत्राप्यसत्त्वग्रहणेन विरुद्धस्य निरासः । यथा नित्यश्शब्दः कृतकत्वाद्घटवत् । विरुद्धो हि विपक्षेऽस्ति । एवकारेण साधारणस्य विपक्षैकदेशवृत्तेर्निरासः । प्रयत्नानन्तरीयकत्वे साध्ये अनित्यत्वं विपक्षैकदेशे विधुदादावस्ति । आकाशादौ नास्ति । ततो नियमेनास्य निरासः । असत्त्ववचनात्पूर्वस्मिन्नवधारणे अयमर्थः स्यात् । विपक्ष एव यो नास्ति स हेतुः । तथा च प्रयत्नानन्तरीयकत्वं सपक्षेऽपि नास्ति, ततो न हेतुः स्यात्, ततः पूर्व न कृतमिति । निश्चितग्रहणेन सन्दिग्धविपक्षव्यावृत्तिकस्य निरासः । यथावीतरागोऽयं पुरुषो वक्तृत्वात्, रथ्यापुरुषवत् । यत्रावीतरागत्वं नास्ति तत्र वक्तृत्वमपि नास्ति, यथोपलखण्डे । यदि नाम पाषणखण्डादुभयं व्यावृत्तं तथापि न ज्ञायते किमवीतरागत्वनिवृत्त्या पाषणखण्डाद्बक्तृत्वं निवृत्तं, अहोस्वित्स्वत एवेति । ततः सन्दिग्धव्यतिरेकोऽयमनैकान्तिकः । असत्त्वशब्दात्पश्चादेवकारेण विपक्षैकदेशवृत्तेर्निरासः । यथा - प्रयत्नानन्तरीयकश्शब्दोऽनित्यत्वात् । अनित्यत्वं विपक्षादाकाशान्निवृत्तं, न विद्युतः । ततो विपक्षैकदेशवृत्तित्वमस्य ॥

# त्रिरूपप्रयोगस्य प्रयोजनम्

ननु सपक्ष एव सत्त्यमित्युक्ते सामार्थ्यादेवासपक्षे चासत्त्वमिति गम्यते । तत्किमर्थमुभयोरुपादनमिति चेत्? विपक्षनियमार्थमिति पूर्ववृद्धाः । ते च त्रिविध एव विपक्षो भवतीति मन्यन्ते । साध्याभावमात्रं, साध्यादन्यः, साध्येन सह विरुद्धश्च प्रयोगनियमार्थमिति केचित् । अन्वयप्रयोगो व्यतिरेकप्रयोगो वा नियमवानेकः प्रयोक्तव्यो न द्वावपीति । साधर्म्यवैधर्म्यप्रयोगसूचनार्थमिति केचित् ।

## त्रिलिङ्गभेदनिरूपणम्

त्रिरूपाणि च त्रीण्येव लिङ्गानि । त्रीणि रूपाणि येषां तानि त्रिरूपाणि त्रीण्येव लिङ्गानि । कार्यं त्रिरूपं लिङ्गम् । स्वाभावस्त्रिरूपं लिङ्गम् । अनुपलब्धिस्त्रिरूपं लिङ्गम् । साधनं ज्ञापकं हेतुर्व्याप्यं चेति लिङ्गापरनामानि ।

## कार्यहेतुनिरूपणम्

तत्र कार्यं यथा - यत्र धूमस्तत्राग्निर्यथा महानसे, धूमश्चात्रेति । व्याप्तिपक्षधर्मतासंज्ञकं द्वयवयवमेव साधनवाक्यं सौगतानाम् । अन्ये तु प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनं चेति पञ्चावयवं साधनवाक्यमाहुः । उपन्यासश्चेदृशः - अग्निरत्र, धूमात्, यत्र धूमस्तत्राग्निर्यथा महानसे, तथा चायं, तस्मादग्निरिति । एतच्चायुक्तम् । प्रतिज्ञावचनमात्रात्सम्बन्धरहितात्साध्यप्रतिपत्तेरयोगात् । सम्बन्धाभावस्तु शब्दार्थयोः सम्बन्धदूषणे प्रतिपादितत्वान्न पुनरुच्यते । प्रतिज्ञामन्तरेण पञ्चप्यन्तहेतुप्रयोगोऽप्ययुक्तः । हेतुं विनोपनयदृष्टान्तावप्ययुक्तौ । यत्र प्रतिज्ञैव नास्ति तत्र प्रतिज्ञायाः पुनर्वचनं निगमनं कुतो भविष्यतीति सर्वमामूलं विशीर्णम् ।

## कार्यसम्बन्धनिरपणम्

अयं च कार्यहेतुर्विषयभेदेन त्रिविधः । अग्न्यादौ साध्ये धूमादिः त्रिविधप्रत्यक्षानुपलम्भेन निश्चेतव्यः । चक्षुरादौ साध्ये ज्ञानं कादाचित्कार्योत्पादान्निश्चीयते । रूपादौ साध्ये रसादिरेकसामग्र्यधीनतया निश्चीयते, यथा मातुलुङ्गफले रसाद्रूपानुमानम् । न रूपाद्रसानुमानम् । अत्र रूपे जनयितव्ये पूर्वकं रूपमुपादानम् । रसस्तु सहकारिकारणम् । पूर्वपुञ्जादुत्तरपुञ्जस्योत्पत्तौ न्याय एषः ।

ननूपादानसहकारिकारणयोरन्वयव्यतिरेकानुविधानस्य कार्यं प्रति तुल्यत्वात्को भेदः? उच्यते, यद्विक्रियया यन्निष्पत्तिरेकसन्ताने तत्कार्यं प्रतिपूर्वकमुपादानम् । यत्सन्तानान्तरे विशेषोदयनिमित्तं तत्सहकारिकारणम् । यथा शाल्यङ्कुरे जनयितव्ये शालिबीजमुपादानम्, क्षितिसलिलादि तत्र सहकारि । तदेवं कार्यहेतुस्तदुत्पत्तिसम्बन्धाद्गमक इति स्थितम् ॥

## स्वभावहेतुनिरूपणम्

स्वभावो यथा - स्वभावः स्वसत्तामात्रभाविनि साध्यधर्मे यो हेतुरुच्यते स तस्य साध्यस्य धर्मस्य स्वभावो बोद्धव्यः । यथा- वृक्षव्यवहारयोग्योऽयं शिंशपाव्यवहारयोग्यत्वात् । अयमिति पुरः परिदृश्यमानः पदार्थो धर्मी । शिंशपाव्यवहारयोग्यत्वादिति हेतुः । शिंशपाव्यवहारयोग्यत्वादिति कोऽर्थः?

शाखापत्रवर्णसंस्थानविशेषव्यवहारयोग्यत्वादित्यर्थः । वृक्षव्यवहारयोग्यत्वं साध्यम् । नन्वेकत्वे साध्यसाधनभावो न युक्तः, प्रतिज्ञार्थैकदेशत्वात्? न । अभेदेऽपि कश्चित्प्रतिपत्ता शिंशपाव्यवहारं कृत्वा तत्र वृक्षव्यवहारं प्राक्कृतमपि व्यामोहात्किञ्चिदारोप्य पुनर्न करोति । स इदानिं स्वभावहेतुना व्यवहार्यते । तस्मादेतयोः परमार्थत एकत्वेऽपि विकल्पबुद्धौ व्यावृत्तिसमाश्रयेण समुत्पन्नायां भेदेन प्रतिभासनात्साध्यसाधनत्वं न विरुध्यत इति ॥

## अनुपलब्धिहेतुनिरूपणम्

अनुपलब्धिर्यथा - नास्तीह प्रदेशे घटः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः । उपलब्धिलक्षणप्राप्तस्येति दृश्यस्येत्यर्थः ।

नन्वसतः कथं दृश्यता? एकेन्द्रियज्ञानग्राह्यो प्रदेशादावुपलभ्यमाने यदि घटः स्यात्दृश्य एव भवेदिति । उपलम्भप्रत्ययान्तरसाकल्यात्दृश्तया सम्भावितः, न तु दृश्य एव । तस्यानुपलब्धेरिति हेतुः । स चैकज्ञानसंसर्गिपदार्थादेकज्ञानसंसर्गिपदार्थोपलम्भाद्वा निश्चीयत इति तदुभयं कर्मकर्तृभावेन पर्युदासवृत्त्या अनुपलब्धिरुच्यते, न तु प्रसज्यवृत्त्या उपलब्धिनिवृत्तिमात्रम् । तद्धि स्वयमेव न किञ्चिदिति कथं साधनं स्यात् । नापि प्रतिषेध्यादन्यस्य ज्ञानमात्रम्, रूपोपलम्भादपि नारङ्गरसनिषेधप्रसङ्गात् । तस्मान्निषेध्यादन्यद्विशिष्टमेव वस्तुद्वयं प्रदेशः प्रदेशज्ञानं वानुपलब्धिरिति स्थितम् ।

## अभावोऽसाध्यः

अत एवाभावो न साध्यते । तस्य घटविविक्तप्रदेशग्राहिणा प्रत्यक्षेणैव सिद्धत्वात् । अभावव्यवहारस्तु मृढं प्रति अनुलम्भेन साध्यते । तथा हि - कश्चिन्मूढो रजःप्रभृतिषु सांख्यप्रसिद्धेषु गुणेष्वनुपलम्भेन प्रवर्त्तिताभावब्यवहारोऽपि पुनः सर्वं सर्वत्रास्तीति स्वसिद्धान्ताभ्यासात्क्वापि प्रदेशादौ घटानुपलम्भे सत्यपि नाभावव्यवहारं करोतीत्यनुपलम्भेन त्रिविधो व्यवहारः कार्यते । तत्र निः शङ्कगमनागमनलक्षणः कायिको

व्यवहारः । घटो नास्तीति वाचिकः । ईदृश एव अन्तर्जल्पाकारो मानसिकश्चेति । अनुपलब्धेर्तादात्म्यतदुत्पत्तिसम्बन्धनिरूपणमनुपलम्भस्य कर्मधर्मपक्षे साध्येन सह [सादृश्ये] तादात्म्यलक्षण एव सम्बन्धो बोद्धव्यः । कर्तृधर्मपक्षे तु तदुत्पत्तिः । तथा हि - घटविविक्तप्रदेशः प्रदेशज्ञानं वानुपलब्धिरित्युक्तम् । असद्व्यवहारयोग्यत्वं च तस्य स्वभावः [न कार्य] ज्ञानं तु प्रदेशस्य कार्यमिति ॥

### अनुपलब्धेर्व्यपदेशः

ननु यद्यनुपलब्धेरपि तादात्म्यतदुत्पत्ती एव सम्बन्धौ, कथं तर्हि कार्यस्वभावाभ्यामनुपलब्धेर्भेदः? प्रतिषेधसाधनात्भेदौ न वस्तुतः । यथोक्तमाचार्येण - अत्र द्वौ वस्तुसाधनौ, एकः प्रतिषेधहेतुः इति । उपलब्धिलक्षणप्राप्तत्वविशिष्टेन देशविपकृष्टे सुमेर्वादौ कालविप्रकृष्टे भविष्यच्छङ्खचक्रवर्त्यादौ स्वभावविप्रकृष्टे पिशाचादावनुपलम्भमात्रसम्भवेऽपि नाभावव्यवहार इत्युक्तं भवति ।

### अनुपलब्धेर्वर्तमानकाले अनागतकाले च प्रमाणम्

इयं चानुपलब्धिर्वर्तमानकाले प्रमाणं विशिष्टस्मरणसद्भावेऽतीतकाले च, अनागतकालेत्वनुपलब्धिः स्वयमेव सन्दिग्धरूपा । ततो न प्रमाणम् । [अनयानुलब्ध्याभावव्यहारः साध्यते, न त्वभावः । तस्य प्रत्यक्षेणैव सिद्धत्वादित्युक्तं प्राक्] यथाहन्यायवादी -

अमूढस्मृतिसंस्कारस्यातीतस्य वर्तमानस्य च प्रतिपत्तृप्रत्यक्षस्य निवृत्तिरनुपलब्धि रभावव्यवहारसाधनी इति ।

## अनुपलब्धिभेदाः

तत्र यदा दूरत्वान्निषेध्यस्यायोग्यदेशत्वं स्यात्, तदा दृश्यानुपलब्धिः साक्षात्प्रयोक्तुं न शक्यत इति कार्यानुपलब्ध्यादयः प्रयुज्यन्ते । अत एवेयं प्रयोगभेदेन षोडशधा भवति । (१) तत्र स्वभावानुपलब्धिर्यथा - नास्त्यत्र धूमः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः । प्रतिषेध्यस्य धूमस्य यः स्वभावः तस्येहानुपलब्धिः । (२) कार्यानुपलब्धिर्यथा - नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति, धूमाभावात् । प्रतिषेध्यानां हि धूमकारणानां कार्य धूमः, तस्येहानुपलब्धिः । (३) कारणानुपलब्धिर्यथा - नास्त्यत्र धूमः दहनाभावात् । प्रतिषेध्यस्य धूमस्य कारणं दहनः, तस्येहानुपलब्धिः । (४) व्यापकानुपलब्धिर्यथा - नात्र शिंशपा, वृक्षाभावात् । प्रतिषेध्यायाः शिंपायाः व्यापको वृक्षः, तास्येहानुपलब्धिः । (५) स्वभावविरुद्धोपलब्धिर्यथा - नात्र शीतस्पर्शः, वह्नेरिति । प्रतिषेध्यस्य्शीतस्पर्शस्य यः स्वभावः तस्य विरुद्धो वह्निः तस्य चेहोपलब्धिः । (६) कार्यविरुद्धोपलब्धिर्यथा - नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति, वह्नेरिति । अन्त्यदशाप्राप्तमेव कारणं कार्यं जनयति, न सर्वं कारणाम्, ततो विशेषणोपादानम् । प्रतिषेध्यानां शीतकारणानां कार्यं शीतं, तस्य विरुद्धो वह्निः, तस्येहोपलब्धिः । (७) कारणविरुद्धोपलब्धिर्यथा - नास्य रोमहर्षादिविशेषाः सन्ति, सन्निहितदहनविशेषत्वात् । प्रतिषेध्यानां रोमहर्षादिविशेषाणां कारणं शीत, तस्य विरुद्धो दहनविशेषः, तस्य चेहोपलब्धिः । (८) व्यापकविरुद्धोपलब्धिर्यथा - नात्र तुषारस्पर्शः, दहनात् । प्रतिषेध्यस्य तुषारस्पर्शस्य व्यापकं शीतं, तस्य विरुद्धो दहनविशेषः तस्येहोपलब्धिः । (९) स्वभावविरुद्धकार्योपलब्धिर्यथा, नात्र शीतस्पर्शः, धूमात् । प्रतिषेध्यस्य शीतस्पर्शस्य यः स्वभावस्तस्य विरुद्धोऽग्निः, तस्य कार्य धूमः, तस्य चेहोपलब्धिः । (१०) कार्यविरुद्धकार्योपलब्धिर्यथा - नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति धूमादिति । प्रतिषेध्यानां शीतकारणानां कार्यं शीतं, तस्य विरुद्धो वह्निः, तस्य कार्यं धूमः, तस्य चेहोपलब्धिः । (११) कारणविरुद्धकार्योपलब्धिर्यथा - न रोमहर्षादिविशेषयुक्त स्पर्शवानयं प्रदेशो धूमादिति । प्रतिषेध्यानां हि रोमहर्षादिस्पर्शविशेषाणां कारणं शीतम्, तस्य विरुद्धोऽग्निः, तस्य कार्यं धूमः, तस्य चेहोपलब्धिः । (१२) व्यापकविरुद्धकार्योपलब्धिर्यथा - नात्र तुषारस्पर्शः, धूमादिति । निषेध्यस्य तुषारस्पर्शस्य व्यापकं शीतम्, तस्य विरुद्धोऽग्निः, तस्य कार्यं धूमः, तस्य चेहोपलब्धिः । (१३) स्वभावविरुद्धव्याप्तोपलब्धिर्यथा - नात्र वह्निः, तुषारस्पर्शात् । प्रतिषेध्यस्य हि वह्नेर्यः स्वभावस्तस्य विरुद्धं शीतम्, तेन व्याप्तस्तुषारस्पर्शः, तस्य चेहोपलब्धिः । (१४) कार्यविरुद्धव्याप्तोपलब्धिर्यथा - नेहाप्रतिबद्धसामर्थ्यानि वह्निकारणानि सन्ति, तुषारस्पर्शादिति । प्रतिषेध्यानां वह्निकारणानां कार्यं वह्निः, तस्य विरुद्धं शीतम्, तेन व्याप्तस्तुषारस्पर्शः, तस्य चेहोपलब्धिः । (१५) कारणविरुद्धव्याप्तोपलब्धिर्यथा - नात्र धूमस्तुषारस्पर्शादिति । प्रतिषेध्यस्य धूमस्य यत्कारणमग्निः, तस्य विरुद्धं शीतम्, तेन व्याप्तस्तुषारस्पर्शः, तस्य चेहोपलब्धिः । (१६) व्यापकविरुद्धव्याप्तोपलब्धिर्यथा - नायं नित्यः, कदाचित्कार्यकारित्वात् । प्रतिषेध्यस्य नित्यत्वस्य निरतिशयत्वं व्यापकं, तस्य विरुद्धं सातिशयत्वं, तेन व्याप्तं कदाचित्कार्यकारित्वं, तस्य चेहोपलब्धिः । एते च कार्यानुपलब्ध्यादयः पञ्चदश प्रयोगाः स्वभावानुपलब्धिस्वभावा एव प्रतिपत्तव्याः । प्रयुक्तिभेदेन परं भेदः । तत्र स्वभावानुपलम्भेनासद्व्यवहारयोग्यत्वं साध्यते, न त्वाभावः । तस्य च प्रत्यक्षेणैव सिद्धत्वात् । अपरैश्च सर्वैरभावोऽभावब्यवहारश्च साध्यते, तेषां परोक्षविषयत्वात् ॥

इति तर्कभाषायां स्वार्थानुमानपरिच्छेदो द्वितीयः समाप्तः ॥

## परार्थानुमानम्

परार्थानुमानलक्षणम्

त्रिरूपलिङ्गाख्यानं परार्थानुमानम् । अन्वयव्यतिरेकपक्षधर्मतासंज्ञकानि त्रीणि रूपाणि, येन वचनेन प्रख्याप्यन्ते तद्वचनमुपचारादनुमानशब्देनोच्यते ॥

तस्य द्वैविध्यम्

तद्द्विविधं साधर्म्यवद्वैधर्म्यवच्च । साध्यधर्मिदृष्टान्तधमिणोर्हेतु सत्ताकृतं सादृश्यं साधर्म्यम् । तद्यस्यास्ति तत्साधर्म्यवत्साधनवाक्यम् । साध्यधर्मिदृष्टान्तधर्मिणोर्हेतुसत्ताकृतं वैसादृश्यं वैधर्म्यम् । तद्यस्यास्ति तद्वैधर्म्यवत साधनवाक्यम् ।

स्वभावहेतोस्साधर्म्यवत्प्रयोगनिरूपणम्, संस्कृतस्य सर्वस्य क्षणिक त्वसमर्थनं च तत्र स्वभावहेतोः साधर्म्यवन्तं प्रयोगं दर्शयितुं सौत्रान्तिकमतमाश्रित्य भगवता यदुक्तं -

ऽसंस्कृतं क्षणिकं सर्वंऽ इति ।

तद्व्युत्पाद्यते । समेत्य सम्भूय हेतुप्रत्ययैः कृतं वस्तुजातं संस्कृतम् । क्षणिकमिति उत्पत्तिक्षण एव सत्त्वात् । सर्वसंकृतविनाशनिरूपणम्

ऽसर्वं तावत्घटादिकं वस्तु मुद्गरादिसन्निधौ नाशं गच्छत्दृश्यते । तत्र येन स्वरूपेण अन्त्यावस्थायां घटादिकं विनश्यति तच्चेत्स्वरूपमुत्पन्नमात्रस्य विद्यते तदानीमुत्पादानन्तरमेव तेन विनष्टव्यमिति व्यक्तमस्य क्षणिकत्वम् ।ऽ

अथेदृश एव स्वभावस्तस्य स्वहेतोर्जातः, यत्कियन्तं कालं स्थित्वा विनश्यतीति ।

ऽेवं तर्हि मुद्गरादिसन्निधाने च एष एव अस्य स्वभव इति पुनरप्यनेन तावन्तमेव कालं स्थातव्यम्, पुनरप्येवमिति नैव विनश्येदिति । तस्मात्क्षणद्वयस्थायित्वेनाप्युत्पत्तौ प्रथमक्षणवद्द्वितीयक्षणेऽपि क्षणद्वयस्थायित्वात्पुनरपरं क्षणद्वयमवतिष्ठेत । एवं तृतीयेऽपि क्षणे तत्स्वभावत्वान्नैव विनश्यतीति ।ऽ

स्यादेतत्, स्थावरमेव तद्वस्तु स्वहेतोर्जातम्, बलेन विरोधकेन मुद्गरादिना विनाश्यत इति? तदसत्, कथं पुनरेतद्युज्यते, न च तद्विनश्यति स्थावरत्वात्, विनाशश्च तस्य विरोधिन बलेन क्रियत इति? न ह्येतत्सम्भवति जीवति देवदत्तो मरणं चास्य भवतीति ।

अथ विनश्यति, कथं तर्ह्यविनश्वरं तद्वस्तु स्वहेतोर्जातम्? न हि म्रियते चामरणधर्मा चेति युज्यते वक्तुम् । तस्मादनश्वरत्वे कदाचिदपि नशायोगात्, दृष्टत्वाच्च नाशस्य, नश्वरमेव तद्वस्तु स्वहेतोरुपजात इत्यङ्गीकुर्मः । तस्मादुत्पन्नमात्रमेव विनश्यति । तथ च क्षणक्षयित्वं सिद्धं भवति । प्रयोगः पुनरेवं कर्तव्यः - यद्यत्विनश्वरस्वरूपं तत्तदनन्तरानवस्थायि यथा अन्त्यक्षणवर्तिघटस्य स्वरूपम् । विनश्वररूपं च रूपादिकमुदयकाल इति स्वभावहेतुः ।

## निर्विशेषणस्वभावहेतोः प्रयोगः

यदि क्षणक्षयिणो भावाः, कथं तर्हि स एवायमिति प्रत्यभिज्ञानं स्यात्? उच्यते -

निरन्तरसदृशापरापरोत्पादादविद्यानुबन्धाच्च पूर्वक्षणविनाशकाल एव तत्सदृशं क्षणान्तरमुदयते । तेनाकारेण वैलक्षण्यस्याभावाद्भावेन चाव्यवधानात्भेदेऽपि स एवायमित्यभेदाध्यवसायप्रत्ययः पृथग्जनानां प्रसूयते । अत्यन्तभिन्नेष्वपि च लूनपुनर्जातकुशकेशादिष्वपि दृष्ट एव स एवायमिति प्रत्ययः । तथेहापि किं न सम्भाव्यते? तस्मात्सर्व संस्कृतं क्षणिकमिति सिद्धमेवैतन्निर्विशेषणस्य स्वभावहेतोरयं प्रयोग इति ॥ तथापरोऽपि निर्विशेषणप्रयोगः - यत्सत्तत्सर्वमनित्यं, यथा घटः । सन्तश्चामी प्रमाणप्रतीताः । तथापरोऽपि वेदस्य पौरुषयत्वसाधनाय स्वभावहेतुः । यद्वाक्यं तत्पौरुषेयं, यथा रथ्यापुरुष वाक्यम् । वाक्यं चेदम् -

ऽग्निहोत्रं जुहुयात्स्वर्गकामऽ इति ।

## सविशेषणस्वभावहेतोः प्रयोगः

सविशेषणप्रयोगो यथा - यद्यदुत्पत्तिमत्तत्सर्वमनित्यं, यथा घटः । उत्पत्तिमांश्च शब्दः । अनुत्पन्नेभ्यो व्यावृत्तो भाव उत्पन्न उच्यते । यदा सैव व्यावृत्तिर्व्यावृत्त्यन्तरव्यवच्छेदेन व्यतिरिक्तोच्यते भावस्योत्पत्तिरिति तदा कल्पितेन भेदेन स्वभावभूतधर्मेण विशिष्टः स्वभावो हेतुः ।

## भिन्नविशेषणस्वभावहेतोः प्रयोगः

तथा भिन्नविशेषणस्य प्रयोगः - यत्कृतकं तदनित्यं यथा घटः, कृतकश्च शब्दः । ननु चित्रगुरिति भिन्नविशेषणस्य प्रयोगः, यथा चात्र चित्रगोशब्दे भिन्नविशेषणवाचकोऽस्ति न तथा कृतकशब्दे भिन्नविशेषणवाचकं किमप्यस्ति । तत्कथं भिन्नविशेषणस्योदाहरणमिति चेद्? उच्यते - अपेक्षितपरव्यापारो हि स्वभावनिष्पत्तौ भावः कृतकः इत्युच्यते । तत्रः कृतकशब्दः परव्यापारसापेक्षं स्वभाबं प्रकृत्यैव वदन्

भिन्नविशेषणमेवाह ॥

### प्रयुक्तभिन्नविशेषणस्वभावहेतोः प्रयोगः

प्रयुक्तभिन्नविशेषणस्य स्वभावस्य प्रयोगः - यः प्रत्ययभेदभेदी स कृतकः, यथा धूमः, प्रत्ययभेदभेदी च शब्दः । प्रत्ययः कारणं, तस्य भेदस्तेन भेत्तुं शीलं यस्य स प्रत्ययभेदभेदी । कारणमहत्त्वेन महत्त्वं कारणाल्पत्वेनाल्पत्वं यस्येत्यर्थः प्रत्ययभेदभेदिशब्दस्य भिन्नविशेषणवाचकस्यात्र प्रयुक्तत्वात्प्रयुक्तभिन्नविशेषणोऽयम् । स्वभावहेतोः नानाप्रभेददर्शनं च व्यामोहनिवृत्तये धर्मभेदकल्पनयापि स्वभावहेतुरेव प्रयुज्यत इति प्रतिपादयितुम् ।

## स्वभावहेतोर्वैधर्म्यवत्प्रयोगनिरूपणम्

स्वभावहेतोर्वैधर्म्यवान् प्रयोगो यथा - यद्यदानन्तरानवस्थायि न भवति न तत्तदा विनश्वररूपं, यथाकाशम् । विनश्वररूपं च रूपादिकमुदयकाले । व्यतिरेकप्रयोगे साधनाभावेन साध्याभावस्य व्याप्तत्वात्साध्याभावः साधनाभावे नियतो भवतीति बोद्धव्यम् । तथापरोऽपि वैधर्म्यवान् प्रयोगः - यत्र क्षणिकत्वं नास्ति तत्र सत्त्वमपि नास्ति, यथा गगनारविन्दे । संश्च शब्दः । तथा यत्रानित्यत्वं निवृत्तं तत्रोत्पत्तिमत्त्वमपि, यथा कूर्मरोम्णि । उत्पत्तिमांश्च शब्दः । यत्रानित्यत्वं निवृत्तं तत्र कृतकमपि, यथा शशश्रिङ्गे । कृतकश्च शब्दः । यत्र कृतकत्वं नास्ति तत्र प्रत्ययभेदभेदित्वमपि नास्ति, यथा गगने । प्रत्ययभेदभेदी च शब्द इति ॥

### कार्यहेतोः साधर्म्यवद्वैधर्म्यवत्प्रयोगनिरूपणम्

कार्यहेतोः साधर्म्यवान् प्रयोगो यथा - यत्र यत्र धूमस्तत्र तत्राग्निः, यथा महानसे, धूमश्चात्र । कार्यहेतुरपि प्रत्यक्षानुपलम्भाभ्यां सिद्ध एव कार्यकारणभावे सति कारणे साध्ये प्रयोक्तव्यः । वैधर्म्यप्रयोगो यथा असत्यग्नौ न भवत्येव धूमः यथा - महाह्रदे । अस्ति चेह धूम इति ।

### अनुपलब्धेस्साधर्म्यवद्प्रयोगः

अनुपलब्धेः साधर्म्यवन् प्रयोगोऽवयविनिराकरणाय यथा - यद्यत्रोपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्तत्रासद्व्यवहारयोग्यम्, यथा नरशिरसि शृङ्गम् । नोपलभ्यते चात्रोपलब्धिलक्षणप्राप्तः पराभिमतोऽवयवी घटशब्दवाच्येषु कपालेषु ।

### वैधर्म्यवत्प्रयोगनिरूपणम्

अनुपलब्धेर्वैधर्म्यवान् प्रयोगो यथा - यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एव, यथा नीलादिविशेषः । नेह उपलब्धिलक्षणप्राप्तस्य सत उपलब्धिर्घटस्येति ।

साध्यसाधनयोर्व्याप्तिः

सर्वत्र साधर्म्यवति साधनवाक्ये साध्येन साधनं व्याप्तम् । बैधर्म्यवति [पुनः] साधनवाक्ये साधनाभावेन साध्याभावो व्याप्त इति प्रतिपत्तव्यम् । साधनस्य च साध्ये

नियतत्वकथनं साध्याभावस्य साधनाभावे नियतत्वकथनं नाम व्याप्तिरभिधीयते । ततः प्रमाणेन व्याप्तिसिद्धौ सत्यां नेदं क्वापि शङ्कनीयं साधनं च स्यात, साध्यं च तत्र धर्मिणि न स्यादिति । पराङ्गीकृतेश्वरसाधकानुमानस्य निरसनम्

यत्र प्रमाणेन सर्वोपसंहारवती व्याप्तिरेव न सिद्धा, तत्र शङ्काप्रसरोऽनिवार्यः । यथेश्वरसिद्धौ कार्यत्वानुमाने । तथा हि तेषां साधनोपन्यासः । इहान्यः सर्वज्ञो भगवान् भवतु वा मा भूत्, ईश्वरः पुनस्सर्वज्ञः शक्यते साधयितुम् । तथा हि, लोके त्रयः खलु भावाः केचिन्निश्चितकर्तृकाः, यथा घटादयः । केचिन्निश्चितकर्तृनिवृत्तयः, यथा व्योमादयः । अन्ये पुनः सन्दिग्धकर्तृकाः, यथा क्षित्यादयः । न पुनरेतेभ्योऽन्यः प्रकारोऽस्ति । तत्र ये दृश्यमानोत्पत्तयो वनस्पत्यादयो ये च चिरोत्पन्ना विश्वम्भरादयः ते सर्वे सन्दिग्धकर्तृत्वेन व्यवतिष्ठमाना बुद्धिमत्कर्तृकाः कार्यत्वात्, घटादिवत् । नायमसिद्धो हेतुः, कार्यत्वस्य सर्वोषां प्रमाणसिद्धत्वात् । नापि विरुद्धः, सपक्षे भावात् । न चानैकान्तः, साध्यविपर्यये बाधकप्रमाणसद्भावात् । तथाहि - कार्य तावत्बुद्धिमतः कुम्भकारादुपजायमानं भूयोदर्शनसहायेन मानस प्रत्यक्षेणोपलब्धम् ।

तद्यदि बुद्धिमन्तरेणापि स्यात्तदानीं बुद्धिमतः सकाशात्कदाचिदपि नोपजायेत । कारणाभावे कार्यस्य सकृदप्युत्पादायोगात् । तस्मान्नेदं क्वापि शङ्कनीयं कार्यं च स्यात्न बुद्धिमद्धेतुकमिति । अत्रेदमभिधीते - साधनं खलु सर्वत्र साध्यसाधनयोः सर्वोपसंहरेण प्रमाणेन व्याप्तौ सिद्धायां साध्यं गमयेदिति सर्ववादिसम्मतम् । तत्र यदि दृस्यशरीरविशिष्टेन बुद्धिमता व्याप्तिर्गृह्यते तदा तथाभूतसाध्यमन्तरेणापि जायमाने तृणादौ कार्यत्वस्य दर्शनात्प्रमेयत्वादिवत्साधारणानैकान्तिकोऽयं हेतुः । तृणादयः पक्षीकृता इत्यपि न वक्तव्यम् । न हि व्यभिचारविषय एव पक्षो भवितुमर्हति-

'सन्दिग्धे हेतुवचनात्व्यस्तो हेतोरनाश्रयऽ इति न्यायात् ।

अथाशक्यारोहणेऽपि पर्वते दहनमन्तरेण च धूमदर्शनात्, एवं धूमेऽपि व्यभिचारो वक्तुं सुलभ एव? तन्न । अशक्यारोहणत्वेन पर्वते दहनस्य द्रष्टुमशक्यत्वात्युक्तं तत्र सन्दिग्धविषयत्वम् । प्रस्तुते तु दृश्यशरीरविशिष्टेन बुद्धिमता व्याप्तौ गृह्यमाणायां दृश्यानुपलम्भेन बुद्धिमतो बाधो भवतीति युक्तम् । अथ दृश्यशरीरेण बुद्धिमन्मात्रेण वा व्याप्तिरवगम्यते तदा अदृश्यस्य बुद्धिमन्मात्रस्य वा साध्यस्य दृश्यानुपलम्भेन व्यतिरेकासिद्धेः सन्दिग्धविपक्षव्यावृत्तिकोऽयं हेतुः ।

साध्याभावप्रयुक्तस्य साधानाभावस्य [काशदाव] सिद्धत्वेन व्याप्तेरभावात्तथा चोक्तं ज्ञानश्रीमित्रपादैः । कार्यत्वस्य विपक्षवृत्तिहतये सम्भाव्यतेऽतीन्द्रियः ।

कर्ता चेद्व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति ॥

दृश्योऽथ व्यतिरेकसिद्धिमनसा कर्ता समाश्रीयते । तत्त्योगोऽपि तदा तृणादिकमिति व्यक्तं विपक्षेक्षणम् ॥

त्रिलोचनाभ्युपगतस्य वह्निधूमयोः स्वाभावविक सम्बन्धवादस्य निरसनम्

यच्च त्रिलोचनेनोक्तम्-

'यथा स्वाभाविकः सम्बन्धो धूमादीनां वहनयादिभिस्सह तथा कार्यत्वस्य बुद्धिमता सार्धम्, तदुपाधेरनुपलभ्यमानत्वात्, क्वचिद्व्यभिचारस्यादर्शनात्ऽ इति ।

तन्न युक्तम् । यतोऽर्थान्तरं किञ्चिदपेक्षणीयमुपाधिशब्देनाभिधीयते । न चार्थान्तरमवश्यं दृश्यं स्यात् । अदृश्यमपि देशकालस्वभावविप्रकृस्टं सम्भाव्यते । अतो धूमस्य दहनेन सह सम्बन्धे भविष्यत्युपाधिः । न चोपलभ्यत इति कथमदर्शनमात्रेण नास्त्येवेत्युच्यते । यदप्युक्तं व्यभिचारस्यादर्शनादिति साधनं, तदपि सन्दिग्धासिद्धम् । प्रत्ययान्तरवैकल्येनाहत्य व्यभिचारस्यादर्शनेऽपि सर्वत्र निषेद्धुमशक्यत्वात् । न चैतावता प्रामणिकलोकयात्रातिक्रमः । प्रामाणिकैरेव साधकबाधकप्रमाणाभावे संशयस्य विहितत्वात् । न च चैवं संशयेन सर्वत्रप्रवृत्तिप्रसङ्गः, प्रमाणादर्थसन्देहाच्च प्रवृत्तेरुपपत्तेः । यदप्युक्तम् -

'यथान्यत्वाविशेषेऽपि बौद्धानां किञ्चिदेव वस्तु कार्यं स्यात्,

किञ्चिदेव कारणं, न सर्व, तथा ममाप्यन्यत्वाविशेषेऽपि किञ्चिदेव

धूमादिकं वस्तु स्वाभाविक सम्बन्धेन सम्बद्धं न सर्वम्ऽ इति ।

तन्न युक्तम् । यथा धूमाख्यं वस्तु दहनायत्तमिति प्रमाणसिद्धिं तथा किं स्वाभाविकसम्बन्धोऽपि प्रमाणसिद्धः, येनैवमुच्यते? किञ्च स्वाभाविकसम्बन्ध इति कोऽर्थः? किं स्वतो भूतः, स्वहेतोर्वा भूतः अहेतुको वा इति त्रयो विकल्पाः । तत्र न तावदाद्यः पक्षः, स्वात्मनि क्रियाविरोधात् । नापि द्वितीयः, तदुत्पत्तिसम्बन्धस्वीकारप्रसङ्गात् । अथाहेतुकः, तदा देशकालस्वभावनियमाभावादतीवासङ्गतः स्वाभाविकसम्बन्धवादः ।

किञ्च साधर्म्येण वैधर्म्येण वा दृष्टान्तमात्रमस्तीति न व्याप्तिसिद्धिः । यदृच्छया मिलितयोरपि करभगदर्भयोस्तथाभावप्रसङ्गात् । तस्मान्निदर्शनं नाम [दृष्टान्त उच्यते । स च] गृहीतविस्मृतप्रतिबन्धसाधक प्रमाणस्मरणद्वारेणैव हेतावुपयुज्यते, न स्वसन्निधिमात्रेण । तथाहि - न तावदाकाशे साध्याभावेन सधनाभावः प्रतीयते । आकाशे हि यथा बुद्धिमत्कारणनिवृत्तिस्तथा अचेतनस्यापि कारणस्य निवृत्तिर्नास्त्येव । तत्कस्याभावप्रयुक्तकार्यत्वाभावः प्रतीयतां, येन साध्याभावप्रयुक्तसाधनाभाव व्यतिरेकः सिध्यतीति । नापि घटे कार्यत्वस्य बुद्धिमदन्वयदर्शनादाकाशेऽपि बुद्धिमदभावादेव कार्यत्वाभावो वक्तुं युज्यते, यस्मादनयोस्तादात्म्यं तदुत्पत्तिरन्यो वा स्वाभाविकादिसम्बन्धः पूर्वप्रमाणेन न प्रसाधितः स्यादित्युक्तम् ।

# अदर्शनमात्रेण व्यतिरेकोऽसिद्धः

किञ्चादर्शनमात्रेन व्यतिरेको न सिध्यति । तथा हि, विपक्षे हेतुर्नोपलभ्यत इत्यनेन तदुपलम्भकप्रमाण निवृत्तिरुच्यते । प्रमाणं च प्रमेयस्य कार्यम्,ऽनाकारणं विषयऽ इति न्यायात् । न च कार्यनिवृत्तौ कारणनिवृत्तिर्युज्यते, निर्धूमस्यापि वहनेर्भानात् । यदि पुनः प्रमाणसत्तया प्रमेयसत्ता व्याप्ता स्यात्, तदा युक्तमेवैतत् । केवलमियमेव व्याप्तिरसम्भाविनी, सर्वस्य सर्वदर्शित्वप्रसङ्गात् । तस्मान्नादर्शनमात्रेण व्यतिरेकः सिध्यति । यथोक्तम् -ऽसर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी ।

भूजलान्तर्गतस्यापि बीजस्यासत्त्वदर्शनात्ऽ ॥ इति ॥

वाचस्पतिमतनिरसनम्

यदपि वाचस्पतिराह -

'विशेषस्मृत्यपेक्ष एव संशयो भवति ततो यथादर्शनमेव शङ्कितुमुचितम्ऽ इति ।

अत्रोच्यते - नायं न्यायः सार्वत्रिकः । तथा चाभ्युपगम्यापि ब्रूमः । तथा हि - [कार्यत्वधूमत्वयोः] तादात्म्यतदुत्पत्तिसम्बन्ध वियोगित्वेन साधारणेन धर्मेण प्रमेयत्वधूमत्वकार्यत्वादीनां तन्मतेनापि सजातीयत्वम् । तत्र प्रमेयत्वस्यव्यभिचारदर्शनमेवान्यत्रापि शङ्कामुपस्थापयतीति यथादर्शनमेवेदमाशङ्कितम् । अतः सन्दिग्धविपक्षव्यावृत्तिकत्वं नाम हेतुदूषणं दुर्वारमेव । एतच्च सद्दूषणमेव । अतो यदनेनोक्तम् -ऽनायं हेतुदोषः, अतो न परिहर्तव्यः, तस्य चोपन्यासोऽदोषोद्भावनं नाम निग्रहस्थानम्ऽ इति । तदिदानीं स्वमतेनैवानेन वादिना निरनुयोज्यानुयोगलक्षणेन निग्रहस्थानेनात्मा बाधित इत्युपेक्षणियोऽयं देवानां प्रियः ॥

# ईश्वरसाधकानुमाने अनुपपत्तिः

ननु यदि दृश्याग्निधूमसामान्ययोरिव दृश्यात्मनोरेव कार्यकारणसामान्ययोः प्रत्यक्षानुलम्भतो व्याप्तिस्तदा सन्तानान्तरानुमानं न स्यात्, परचित्तस्यादृश्यात्मकतया व्याप्तिग्रहणकालेऽनन्तर्भावादिति चेत्? न । स्वसंवेदनं हि तत्र व्याप्तिग्राहकम् । स्वसंवेदनमात्रापेक्षया परिचित्तस्यापि दृश्यत्वात् । न चैवं व्यावहारिकेन्द्रियप्रत्यक्षमात्रबुद्धिमन्मात्रं जठरचित्रसाधारणं वह्निमात्रं वा गोचरो युज्यते, येनास्यापि दृश्यता स्यात् । तस्मात्दृश्येनैव वह्निना धूमस्य प्रत्यक्षानुपलम्भाभ्यां व्याप्तिरिति न्यायः ॥ किञ्च यदि बुद्धिमन्मात्रपूर्वकत्वमनेन साध्यते, तदा सिद्धसाधनतादूषणं साधनस्य । अथ एको नित्यः सर्वज्ञ इत्यादिविशेषणविशिष्टबुद्धिमत्पूर्वकत्वं साध्यते, तदा एवं विशेषणविशिष्टेन साध्येन सह कार्यत्वस्य साधनस्य दृष्टान्तधर्मिणि प्रमाणेन व्याप्तेरसिद्धेरनैकान्तिकत्वम् । अथ सामान्येन व्याप्तिमादाय विशेषस्य पक्षधर्मताबलात्सिद्धिरुच्यते? तन्न युक्तम् । येन साध्यगतेन विशेषणेन विना हेतोर्वृत्तिर्धर्मिणि न घटते, तस्य विशेषस्य पक्षधर्मबलाद्युक्ता सिद्धिः । यथा धूमात्पर्वतदेशवृत्तित्वस्य दहनधर्मस्य, न तु तार्णत्वादीनां विशेषाणाम् । तार्णतामन्तरेणापि पर्वते धूमदर्शनात् । तद्वद्बुद्धिमतोऽपि शरीरादिवृत्तित्वं यदि सिध्यति, सिद्ध्यतु । न पुनरत्यन्तविलक्षणं सर्वज्ञत्वम् । असर्वज्ञत्वेऽपि कार्यत्वस्य सम्भवात् । उपादानाद्यभिज्ञत्वादपि न सर्वज्ञत्वसिद्धिः, एकत्वसिद्धौ सिध्त्येतत् । न चैकत्वं सिद्धम् । अनेककर्तृपूर्वकत्वेऽपि कार्यत्वस्य सम्भवात् । यथानेककीटिकानिष्पादितः शक्रमूर्धा । अथ शक्रमूर्ध्नोऽपीश्वरपूर्वकत्वं साध्यं, तर्हि घटस्यापीश्वरपूर्वकत्वसिद्धौ कुतो दृष्टान्ततत्वम्? अथ कुम्भकारस्य कर्तृत्वं दृष्टं कथमपाक्रियते? कीटकादीनां च हेतुत्वं दृष्टं तदपि कथं वार्यते? नापि बहूनां कारणत्वे विप्रतिपत्तिसम्भावना, दृष्टत्वादेवेति । तस्मात्साध्यसाधनयोः सर्वोपसंहारवती व्याप्तिर्दृष्टान्तधर्मिणि प्रमाणेनावश्यं दर्शयितव्येति स्थितम् । किञ्च नित्यैकसर्वज्ञे बुद्धिमति साध्ये विरुद्धोऽप्येषः । अनित्यानेकासर्वज्ञेन बुद्धिमता व्याप्तत्वात्कार्यत्वस्य । तथा हि, साध्यविपर्ययसाधनादिह विरुद्ध उच्यते । अयं च साध्यविपरीतं साध्यतीत्यास्तां तावत्प्रस्तावायातेश्वरदूषणोद्भावनानिबन्धकरणम् ॥

# साधर्म्यवैधर्म्यप्रयोगेषु त्रैरूप्यासिद्ध्याशंङ्का तन्निरसनञ्च

ननु साधर्म्यवति साधनवाक्ये अन्वय एवोक्तः न तु व्यतिरेकः । वैधर्म्यवति च व्यतिरेक एवोक्तः, न त्वन्वयः । तत्कथमाभ्यां त्रिरूपं लिङ्गं कथ्यत इति चेत्, नैष दोषः । यस्मात्साधर्म्यवति च साधनवाक्ये, उपन्यस्ते सामर्थ्यादेव व्यतिरेकोऽवगम्यते । व्यतिरेकागृहीतौ च साध्याभावेऽपि न साधनाभाव इति विपर्ययः सम्भावयितव्यः । एवं चान्वयस्यैवाभावः स्यात् । सत्यपि साधने साध्याभावादिति सामर्थ्यम् । तथा वैधर्म्यवति साधनवाक्ये उपन्यस्ते सामर्थ्यादेवान्वयोऽवगम्यते, अन्वयगृहीतौ हि साधनं च स्यात्साध्यं च न भवेदिति विपर्ययः सम्भावयितव्यः । एवं च व्यतिरेक एव न भवेत् । साध्याभावेऽपि साधनस्य भावादिति सामर्थ्यम् । तस्मात्द्वावपि प्रयोगौ त्रिरूपलिङ्गप्रकाशकावित्यदोषः ॥

# व्यप्तिग्राहक प्रमाणनिरूपणम्

सम्प्रति साध्यसाधनयोर्व्याप्तिः यत्र धर्मिणि ग्रहीतव्या,येन च प्रमाणेन, तदुभयं सुखावबोधार्थ कथ्यते - स्वभावहेतोः सत्त्वलक्षणस्य क्षणिकत्वेन व्याप्तिः साध्यधर्मिण्येव ग्रहीतव्येति केचित् । तेषामन्तर्व्याप्तिपक्षोऽभिमतः । प्रसङ्गप्रसङ्गविपर्ययाभ्यां दृष्टान्तधर्मिणि घटादौ व्याप्तिर्ग्रहीतव्येत्यन्ये । तेषां बहिर्व्याप्तिपक्षोऽभिमतः । सत्त्वादन्येषां स्वभावहेतूनां कार्यहेतूनामनुपलम्भहेतूनां च दृष्टान्त एव व्याप्तिर्ग्रहीतव्या । तत्र शिंशिपात्वस्य वृक्षत्वव्यवहारे, साध्ये दृष्टान्ते प्रत्यक्षानुपलम्भाभ्यां व्याप्तिर्ग्राहया । सत्त्वक्षणिकत्वयोस्तु प्रसङ्गप्रसङ्गविपर्ययाभ्यां प्रमाणाभ्यां, साध्यविपर्ययबाधकप्रमाणेन वा क्रमयौगपद्यनिवृत्तिलक्षणेन स्वसंवेदनसामर्थ्यसिद्धेर्विकल्पसिद्धेर्वा वस्तुत्वावस्तुत्वाभ्यां सन्दिहयमाने विपक्षे धर्मिणि, कार्यहेतोर्धूमादेर्वहन्यादिना महानसादौ दृष्टान्तधर्मिणि त्रिविधप्रत्यक्षानुपलम्भतः, पञ्चविधप्रत्यक्षानुपलम्भतो वा व्याप्तिर्ग्रहीतव्या । , अनुपलम्भस्य तु असद्व्यवहारयोग्यत्वेन सह व्याप्तिः प्रत्यक्षेणैव । , अन्येषां तु स्वभावहेतूनां कार्यहेतूनां वा केषाञ्चित्, यथास्वभावं प्रमाणेनोन्नीय ग्रहीतव्येति ॥

# हेत्वाभासनिरूपणम्

व्याप्त्यनिश्चये हेतोरनैकान्तिको दोषः । स च त्रिविधः - असाधारणानैकान्तिकः साधारणानैकान्तिकः, सन्धिग्धविपक्षव्याआवृत्तिकश्चेति । तत्र असाधारणानैकान्तिको यथा - सात्मकं जीवच्छरीरम्, प्राणादिमत्त्वातपरजीवच्छरीरवत्, घटवत् । अयं हेतुरपरजीवच्छरीरे आत्मना व्याप्त इति न निश्चितः । घटे च विपक्षे आत्मनोऽभावान्निवृत्त इति न निश्चितः । धर्मिणि तु जीवच्छरीरे विद्यत इति असाधारणानैकान्तिक उच्यते । अपरश्चासाधारणो यथा - अनित्यशब्दः श्रावणत्वात्, घटवत्, आकाशवदिति । साधारणनैकान्तिको यथा - नित्यः शब्दः प्रमेयत्वात्, घटवताकाशवत् । , सन्दिग्धविपक्षव्यावृत्तिको यथा - सः श्यामस्तत्पुत्रत्वात्, परिदृश्यमानतत्पुत्रवदिति ॥

यदुक्तं प्राक्, सत्त्वस्य क्षणिकत्वेन सह व्याप्तिः प्रसङ्गप्रसङ्गविपर्पयाभ्यां ग्रहीतव्येति, तत्र कोऽयं प्रसङ्गो नाम? प्रमाणप्रसिद्धव्याप्तिकेन वाक्येन परस्यानिष्टत्वापादनाय प्रसञ्जनं प्रसङ्गः, यथा - सामान्यस्य, अनेकवृत्तित्वाभ्युपगमे अनेकत्वप्रसञ्जनम् । तथा हि - यदनेकवृत्ति तदनेकं यथा अनेकभाजनगतं तालफम् । अनेकवृत्ति च सामान्यम् । तस्मादनेनाप्यनेकेन भवितव्यमिति प्रसङ्गः ।

## प्रसङ्गस्य कार्यम्

अथानेकत्वं नेष्यते, तदानेकवृत्तित्वं च मा स्वीकुर्वीथाः ।

ननु यद्येतत्प्रसङ्गाख्यं साधनं प्रमाण, न भवति [त्रैरूप्याभावात्] कथमस्योपन्यास इति,

व्याप्तिस्मरणार्थं व्याप्यैकदेशकथनवदिति । यदुक्तम् -

'प्रसङ्गो द्वयसम्बन्धादेकाभावेऽन्यहानयेऽ इति ।

अस्यायमर्थः - व्याप्यव्यापकयोः सम्बन्धे सति यदि व्यापकं नेष्यते तदा व्याप्यमपि नेष्यताम् । अथ व्याप्यमिष्यते तदा व्यापकमपीष्यतामिति ।

वादिना साधना उपन्यस्ते प्रतिवादिना तत्र दूषणं वक्तव्यमिति न्यायः ।

असिद्धविरुद्धानैकान्तिकानामन्यतमस्योद्भावनं दूषणम् । यथोक्तम् -

'दूषणानि न्यूनताद्युक्तिऽ इति ।

## हेतुदूषणम्

नन्वेषामेवोद्भावनं यदि दूषणं,क्व तर्हि वैयर्थ्यासामर्थ्यातिप्रसङ्गादीनामन्तर्भावः? अत्रैव त्रिषु । तत्र वैयर्थ्यं तावदसिद्धेऽन्तर्भवति । सन्दिग्धसाध्यधर्मो हि हेतुरुच्यते । वैयर्थ्यं तु यत्रोपन्यस्यते तत्र सन्दिग्धसाध्यधर्मकत्वं हेतोर्लक्षणं हेतौ न सम्भवतीति असिद्ध उच्यते । [हेतोर्लक्षणस्यासिद्धेः] यदुक्तम् -

'सन्दिग्धे हेतुवचनात्व्यस्तो हेतोरनाश्रयःऽ इति ।

असामर्थ्यं तु स्वरूपासिद्धावन्तर्भवति । न हि हेतोः सामर्थ्य नाम हेतुस्वरूपादन्यत् । हेतोरवस्तुत्वप्रसङ्गात् । अतिप्रसङ्गश्चानैकान्तिकेऽन्तर्भाव्यः, साध्यधर्ममतिक्रम्य विपक्षेऽपि प्रसक्तेरिति ॥

## आत्मनिरसनम्

यत्र तु धर्मिणि साध्यं साधयितुमारब्धं तस्य धर्मिणः प्रमाणबाधित्वे आश्रयासिद्धिर्हेतोर्दूषणम् । यथा सर्वगत आत्मा सर्वत्रोपलभ्यमानगुणत्वात् । तदिह बौद्धस्यात्मैव न सिद्धः, किं पुनसस्य सर्वदेशोपलभ्यमानगुणत्वं सेत्स्यति । तथा हि, तैर्थिकाः खल्वेवं ब्रुवन्ति । शरीरादिवस्तुव्यतिरिक्तं शुभाशुभकर्मकर्तृतत्फलभोक्तृ नित्यव्यापिरूपमात्माख्यं द्रव्यान्तरमस्ति । तेन च यदि नाम विश्वं व्याप्तं तदपि यदुपभोगायतनतया परेण परिगृहीतं जीवच्छरीरं तदेव सात्मकमभिधीयत इति । एतच्चायुक्तम् । आत्मनः सिद्धये प्रमाणाभावात् । न हि प्रत्यक्षेण आत्मा प्रतीयते ।

चक्षुरादिज्ञानानां रूपादिविषयपञ्चकनियतत्वात् । मानसस्याप्यहंप्रत्ययस्य शरीरादिविषयत्वात्गौरोऽहं स्थूलोऽहं गच्छाम्यहमित्याद्याकारेण अहं प्रत्यय उत्पद्यते यदाह अलङ्कारकारः -

अहमित्यपि यज्ज्ञानं तच्छरीरेन्द्रियांशवित् । अहं काणस्सुखी गौरः समानाधारवेदनात् ॥

न चास्य शरीरव्यतिरिक्तस्य तद्धर्मो गौरत्वं स्थूलत्वं वा । न च विभोरमूर्तस्य मूर्तद्रव्यानुविधायिनी गमनक्रिया युक्तिमती । न चायं माणवके सिंहप्रत्यय एव भाक्तो युक्तः, स्खलद्वृत्तिप्रसङ्गात् । नाप्यनुमानेन प्रतीयते, कार्यस्वभावलिङ्गाभावात् । नित्यपरोक्षेण देशकालाकारव्यतिरेकविकलेनात्मना सह कस्यचिदन्वयव्यतिरेकात्मकार्यकारणभावासिद्धेः कार्यलिङ्गायोगत् । धर्मिसत्तायाश्चासिद्धत्वात्स्वभावलिङ्गानुपपत्तेः । न चान्यल्लिङ्गमस्ति । अन्येनापि लिङ्गेन भवता साध्यव्याप्तेन भवितव्यम् । तस्य च सर्वथासिद्धेः, कथं तेन व्याप्तत्वं लिङ्गस्य निश्चीयताम्? किञ्च, कियमात्मा बोधरूपः, अबोधरूपो वा? यदि बोधरूपो नित्यश्च तदा चक्षुरादिवैफल्यप्रसङ्गो दुर्वारः । अथानित्यो बोधरूपस्तदाज्ञानस्यैवात्मेति नाम कृतम्, न विप्रतिपत्तिः । अथाबोधरूपो दृश्यश्च तदानुपलम्भोऽस्य सत्तां न क्षमत इति निरात्मसिद्धिरनवद्या । तस्मात्सर्वं संस्कृतं वस्तु निरात्मकमिति ॥

### स्वरूपासिद्ध्यापि हेत्वभासनिरूपणम्

स्वरूपासिद्धयाप्यसिद्धो हेत्वाभासो भवति । यथा अनित्यश्शब्दः चाक्षुषत्वादिति । ननु व्याप्त्यसिद्धिरपि दूषणम्, तेनापि परेष्टार्थासिद्धेः । तत्किं नोच्यते? अनैकान्तिकदूषणेनैव गतार्थत्वात्पृथङ्नोक्तम् । तथा हि - न स्वलक्षणाभ्यां व्याप्तिर्ग्रहीतुं शक्या । स्वलक्षणस्य देशकालाकारनियतत्वेनाप्यन्यत्रानुगमाभावात् । अपि तु साध्यसाधनसामान्याभ्यामेव व्याप्तिर्ग्रहीतव्या । तत्र च यदि साधनं साध्येन व्याप्तं न प्रतीयते तदा साधनं च स्यात्साध्यं च न स्यादित्यनैकान्तिकमेव भवति ॥

### अपोहनिरूपणम्, सामान्यनिरसनं च

ननु सामान्यं चेदप्रसिद्धं, तत्कथं साध्यसाधनसामान्याभ्यां सर्वोपसंहारवती व्याप्तिः प्रमाणेन गृह्यते? नैष दोषः । यतो यादृशं सामान्यं परैः परिकल्प्यते तादृशं प्रमाणेन बाध्यत इति नाभ्युपेयते तत्सौगतैः । न तु व्यवहारप्रसिद्धमन्यव्यावृत्तिलक्षणमपोहसंज्ञितमपि । ननु कोऽयमपोहो नाम? यथाध्यवसायं बाह्य एव घटादिरर्थ अपोह इत्यभिधीयते, अपोह्यतेऽस्मादन्यद्विजातीयमिति कृत्वा । यथाप्रतिभासं बुद्ध्याकारो वापोहः, अपोह्यते पृथक्क्रियतेऽस्मिन् बुद्ध्याकारे विजातीयमिति कृत्वा । यथातत्त्वं निवृत्तिमात्रं प्रसज्यरूपो वापोहः, अपोहनमपोह इति कृत्वा ।

ननु यथाध्यवसायं विधिरेव, तर्हि केवलो विसाय इत्यागतम् । न अपोहविशिष्टो विधिरभिप्रेतः । यत्तु गोप्रतीतौ न गवात्मा अगवात्मेति सामर्थ्यादपोहः पश्चान्निश्चीयत इति विधिवादिनां मतम् । अन्यापोहप्रतिपत्तौ च सामर्थ्यादन्यपोढो गवादिरर्थोऽवधार्यत इति निवृत्त्यपोहवादिनां मतम् । तन्न युक्तम्, व्यवहारकाले प्रथमं वर्तमानस्यापि प्रतीतिक्रमादर्शनात् । न हि विधिं प्रतिपद्य कश्चिदर्थापत्तितः पश्चादपोहमवगच्छति, अपोहं वा प्रतिपद्य पश्चादन्यापोढमवगच्छति । तस्मात्गोप्रतिपत्तिरेव अन्यापोढ प्रतिपत्तिरुच्यते । यद्यपि गोशब्दादुच्चरितादन्यापोढशब्दानुल्लेख उक्तः, तथापि नाप्रतिपत्तिरेव विशेषणभूतस्यान्यापोहस्य । अगवापोढ एव वस्तुनि गोशब्दस्य संकेतितत्वात् । यथा नीलोत्पलसंकेतितेन्दीवरशब्दातुत्पलप्रतीतौ तत्काल एव नीलमस्फुरणमनिवार्यं तथा गोशब्दादप्यगवापोढ एव वस्तुनि संकेतितात्गोप्रतीतौ तुल्यकालमेव विशेषणत्वातपोहस्य अगवापोह- स्फुरणमनिवार्यम् । यथा च प्रत्यक्षस्य प्रसज्यप्रतिषेधरूपाभावग्रहणमभाव विकल्पोत्पादनशक्तिरेव, तथा विधिविकल्पानामपि तदनुरूपानुष्ठानशक्तिरेवाभावग्रहणमभिधीयते । अन्यथा यदि गोशब्दादर्थप्रतिपत्तिकाले नावगतः परापोहः, कथं तर्हि अन्यपरिहारेण प्रतिपत्ता गवि वर्तताम् । तत्तो गां बधानेति चोदितोऽश्वानपि बध्नीयादिति । तस्मात्स्थितमेतत्,बाह्यार्थोऽध्यवसायादेव शब्दवाच्ये व्यवस्थाप्यते, न तु स्वलक्षणपरिस्फूर्त्या, प्रत्यक्षद्येशकालाकारावस्थानियत प्रव्यक्तस्वलक्षणास्फुरणात् । यदाह न्यायपरमेश्वरः -ऽशब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात् ।

अर्थस्य दृष्टाविवऽ इति ॥

किञ्च स्वलक्षणात्मनि वस्तुनि वाच्ये सर्वात्मना प्रतिपत्तेः विधिनिषेधयोरयोगः । तस्य हि सद्भावे अस्तीति व्यर्थम्, नास्तीत्यसमर्थम् । असद्भावे तु नास्तीति व्यर्थम्,अस्तित्य समर्थम् । अस्ति चास्त्यादिपदप्रयोगः । तस्मात्परमार्थतो न स्वलक्षणं शब्दैरभिधीयत इति स्थितम् ॥

ननु यथा प्रत्यक्षेण घटस्वरूपे गृहीतेऽपश्चात्तत्रैव क्षणिकत्वादिनिश्चयार्थं प्रमाणान्तरं प्रवर्तते, तथा वृक्षशब्देन वृक्षत्वांशे प्रतिपादिते सत्वांशनिश्चयार्थमेव सदादिपदप्रयोगो भविष्यतीति चेत्, न । प्रत्यक्षस्यानिश्यात्मकत्वादनभ्यस्तस्वरूपविषये प्रमाणान्तरं वर्तत इति युक्तम् । विकल्पस्य तु स्वयं निश्यात्मकत्वात्, गृहीते स्वरूपे किं प्रमाणान्तरेण परं ग्रहीतव्यमिति ॥

# परपरिकल्पितसामान्यनिरसनम्

यादृशं सामान्यं परैः परिकल्प्यते, अनेकव्यक्तिसमवेतं दृश्यमेकं नित्यं तादृशस्य सत्तासाधकं न किञ्चित्प्रमाणामुपलभामहे । ततः सदिति व्यवस्थापयितुं तन्न युक्तम् । तथा हि - गवादिव्यक्त्यनुभवकाले वर्णासंस्थानाद्यात्मकं व्यक्तिस्वरूपमपहाय नान्यत्किञ्चिदेकमनुयायि प्रत्यक्षे भासते । तादृशस्यानुभवाभावात् । नापि स्वलक्षणानुभानन्तरमेकाकारपरामर्शप्रत्ययातन्यथानुपपत्त्या सामान्यपरिकल्पनं

युक्तिसङ्गतम् । व्यक्तिभ्य एव स्वहेतुदत्तशक्तिभ्योऽस्य प्रत्ययस्य परम्परयोत्पत्तेः । भेदेऽपि काश्चिदेव व्यक्तयोऽस्य जननाय समर्थाः, न सर्वाः, इत्यत्र कार्यकारणभावस्य प्रत्यक्षानुपलम्भाभ्यां दृष्टस्यातिवर्तयितुमशक्यत्वात् । दृष्टं चेदं सामर्थ्यं भेदाविशेषेऽपि कासाञ्चिदेव व्यक्तीनाम् । यथा ज्वरादिप्रशमने गुडूचीनिम्बादीनाम् । यथोक्तम् -ऽएकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने ।

भेदेऽपि नियताः केचित्स्वभावेनेन्द्रियादिवत्ऽ ॥ इति ॥

किञ्च सर्वगते विजातीयाद्व्यावृत्ते सत्यपि सामान्ये किं भेदाविशेषेऽपि गोव्यक्तिष्वेव समवेतं तत्सामान्यं तत्रैव चैकाकारां बुद्धिं जनयतीति प्रश्ने स्वभावेनैवेत्युत्तरं परस्य । तच्च प्रमाणासङ्गतम् । अस्माकं तु स्वभावेनोत्तरं प्रमाणासिद्धत्वात्युक्तिसङ्गतमेव ॥

तथेदमपरं जातिसाधनाय साधनं परस्य । यद्विशिष्टं ज्ञानं तद्विशेषणग्रहणनान्तरीयकम्, यथा दण्डिज्ञानम् । विशिष्टज्ञानं चेदं गौरयमित्यर्थतः कार्यहेतुः । अत्रोच्यते -

विशिष्टबुद्धेर्भिन्नविशेषणग्रहणनान्तरीयकत्वं साध्यं, विशेषणमात्रानुभवनान्तरीयकत्वं वा । प्रथमपक्षे प्रत्यक्षबाधा । वस्तुग्राहिणि प्रत्यक्षे उभयप्रतिभासाभावात् । विशिष्टबुद्धित्वं च सामान्यमित्यनैकान्तिको हेतुः स्यात्,भिन्नविशेषणग्रहणमन्तरेणापि तस्य दर्शनात् । यथा स्वरूपवानयं घटः, गोत्वसामान्यमिति वा । द्वितीयपक्षे तु सिद्धसाधनम्, स्वरूपवान् घट इत्यादिवत्गोत्वादिजातिमान् पिण्ड इति परिकल्पितभेदमुपादाय विशेषणविशेष्य भावस्येष्टत्वात् ।

अगोव्यावृत्त्यनुभवभावित्वात्गौरयमिति व्यवहारस्य । तदेवमतोऽपि साधनान्न सामान्यसिद्धिरिति । तदेवं परपरिकल्पितसामान्यस्य विचारासहत्वात्, अतद्रूपपरावृत्तवस्तुमात्रमेव सामान्यमपोहशब्दवाच्यं व्यवहाराङ्गं यथाध्यवसायमनवद्यमिति स्थितम् ।

सामान्यस्य निषेधाय प्रयोगः पुनरेवं कर्तव्यः - यद्यत्रोपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्तत्र असद्व्यवहारविषयः,यथा तुरङ्गमोत्तमांगे शृङ्गं, नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सामान्यं परिदृश्यमानासु व्यक्तिष्विति स्वभावानुपलब्धिः । न चासिद्धसम्भावना । वर्णसंस्थानलक्षणं व्यक्तिस्वरूपमपहाय द्वितीयस्यानुयायिनो रूपस्य निपुणमपि निरूप्यमाणस्य सर्वथा दर्शनाभावात्, नापि ज्ञानवद्दर्शनाभावेऽपि प्रत्यक्षसिद्धत्वमस्याभिधातुमुचितम् । ज्ञानं हि स्वसंवेदनप्रमाणसिद्धम्, न तु चक्षुर्विज्ञानग्राह्यम् । इदं [तु सामान्यं] चक्षुर्विज्ञानग्राह्यमर्थधर्मत्वात् । प्रत्यक्षं च परैरिष्टमिति । तदेवं परपरिकल्पितसामान्यस्य विचारासहत्वात्, अतद्रूपपरावृत्तवस्तुमात्रमेव सामान्यमुक्तम् । तस्मात्सर्वं संस्कृतं वस्तु परपरिकल्पितसामान्येन शून्यमिति स्थितम् ॥

## ईश्वरसाधननिरसनम्

नापि केनचिद्बुद्धिमतोपरचित्तमित्यपि विज्ञेयम् । तथा हि - अस्य जगतः कर्त्ता भवन्नित्यो वा भवेदनित्यो वा । तत्र न तावन्नित्यो युक्तः, नित्ये कर्त्तरि समर्थे सति सर्गस्थितिप्रलयानां नियमेन यौगपद्यप्रसङ्गात् । येन हि स्वरूपेण स्थितिप्रलययोः स कर्त्ता तदस्य स्वरूपं सर्गकालेऽपि सन्निहितमिति तदैव स्थितिप्रलयौ कुर्यात् । सहकारिविरहान्न करोतीति चेत्, तदसत् । न हि नित्येन सहकारिणा कदाचिदप्ययं विरहितः सदा सन्निहितत्वात् । नाप्यनित्येन सहकारिणा विरहितः, अनित्यसहकारिणोऽपि तदायत्तजन्मत्वात् । तत एकदा सर्वकरणादिप्रसङ्गः ॥

ननु बुद्धिमत्त्वादीश्वरस्य नैष दोषः । बुद्धिशून्यो हि स्वसत्तामात्रजन्यं कार्यमक्रमेणैव कुर्यात् । बुद्धिमांस्तु कर्त्तुमीशानोऽपि अनिच्छन्न करोतीति कस्तस्योपालम्भः? उच्यते - ता अपीच्छाः स्वसत्तामात्रनिबन्धनाः किं न करोतीति स एवास्योपालम्भः । अथ स्वरूपेण सामर्थ्ये सत्यपि एष एव तस्य स्वभावः, यत्सहकारिलक्षणयागन्तुकशक्त्या विना न करोतीति चेत्, तर्हि मातापि सति वन्ध्या सा प्रकृत्यैवैतदपि वक्तव्यं भवेद्भवतामिति यत्किञ्चिदेतत् ॥

नन्वेष एव कार्यस्वभावः, केवलात्समर्थादपि नोदेति, सहकारिणमपेक्ष्यैव पश्चाद्भवति [नास्योपालम्भ इति] तन्न युक्तम् । समर्थो हि सहकार्यपेक्षामनादृत्य बलादेव कार्यं कुर्यात् । अन्यथा [ह्यस्य] असमर्थत्वप्रसङ्गात् । नित्यस्य क्रमकारित्वनिषेधनम् नापि नित्यः क्रमेण कार्यकारीति युक्तम्, निरपेक्षत्वात् । यदाह दिङ्मण्डलविख्यातकीर्तिर्धर्मकीर्तिः -

नित्यस्य निरपेक्षत्वात्क्रमोत्पत्तिर्न युज्यते । क्रियायामक्रियायां च कालयोः सदृशात्मनः ॥ इति ॥

एतेन आत्मादीनामक्षणिकानां घटादीनां क्षणिकानां च क्रमेण कार्यकरणं प्रत्युक्तम् । न चात्र प्रत्यक्षविरोधः, प्रत्यक्षेणाक्षणिकस्य ग्रहणायोगात् । न हि क्षणिकं प्रत्यक्षमक्षणिकमीक्षितुं क्षमते । अनिकक्षणव्यापारो ह्यक्षणिकः । स कथमेकक्षणभाविनाध्यक्षेण ग्रहीतुं शक्यः । न हि प्रागूर्ध्वं चावस्थानमधुना प्रकाशते । तस्याप्यधुनातनताप्रसङ्गात् । जन्मविनाशावधिप्रतिभासप्रसङ्गादिति नेदं प्रत्यक्षं पूर्वापरकालव्याप्तमर्थं कञ्चिदपि ग्रहीतुमलम् ।

## प्रत्यभिज्ञानस्य प्रत्यक्षत्वं निरसनम्

एतेन प्रत्यभिज्ञानस्याप्रत्यक्षत्वमाख्यातम् । साक्षात्कारि हि ज्ञानं प्रत्यक्षम् । न च प्रागवस्थमधुना साक्षात्कर्तव्यम्, अपि तु स्मर्तव्यम् । न च स्मरणस्वरूपं प्रत्यक्षम् । अथ मतं भवेदिदं स्मरणं यदिदानीन्तनमवस्थानं न साक्षात्कुर्यात्, तत्साक्षात्करणप्रवणं कथमिदं स्मरणं नाम? यदाह भट्टः -

'पूर्वप्रमितमात्रे हि जायते स इति स्मृतिः । स एवायमितीयं तु प्रत्यभिज्ञातिरेकिणिऽ ॥ इति ॥

स्मरणग्रहणस्वरूपं तर्हि प्रत्यभिज्ञानं स्यात्, न तु ग्रहणस्वरूपमेव । स्मर्यमाणे ग्रहणायोगात्, गृह्यमाणे च स्मरणायोगात् । न चैकस्य स्मरणग्रहणे सम्भवतः, परस्परविरोधात् । येन हि स्वरूपेण स्मरणं न तेन स्वरूपेण ग्रहणमित्यनुन्मत्तेन शक्यते वक्तुम् । रूपान्तरेण चैकस्य स्मरणग्रहणे न स्याताम् । भावेऽपि प्रत्यक्षाप्रत्यक्षे स्याताम् । न तु स्मर्यमाणे प्रत्यक्षमेव, प्रत्यक्षायोगात् । तस्मात्प्रत्यभिज्ञाप्रत्ययो भ्रान्त एव, निर्विषयत्वात् । प्रयोगश्चैवम् - यः प्रत्यभिज्ञाप्रत्ययः स तत्त्वतो नैकालम्बनः, यथा लूनपुनर्जाततृणादिषु । प्रत्यभिज्ञा प्रत्ययश्चायं तदेवेदं नीलादीति प्रत्यय इति विरुद्धव्याप्तोपलब्धिः । एकत्वानेकत्वयोः परस्परविरोधात्तद्विषयकसंवेदनयोरपि विरोधः तेनैकालम्बनत्वेन अनेकालम्बनत्वविरुद्धेन अनेकालम्बनत्वेन पूर्वोक्त्या नीत्या प्रत्यभिज्ञाप्रत्ययो व्याप्त इति न प्रत्यभिज्ञानं क्षणिकानुमानबाधकम् । न च केशादिष्वपि सामान्यालम्बनतया एकालम्बनत्वं केशादिव्यक्तेरेव प्रत्यभिज्ञायमानत्वात् । सामान्ये प्रत्यभिज्ञायमाने तदेवेदं केशादीति स्यात्, न तदेवेदं केशादीति । अत एवैकालम्बनत्वे प्रत्यभिज्ञाप्रत्ययस्य क्रमेतराभ्यामुत्पत्तिविरोधात्, विरुद्धानैकान्तिकत्वे नाशङ्कनीये । न च प्रत्यभिज्ञानमेव तदवस्थापकम्, यस्यैव विचार्यमाणत्वात् । तस्मात्स्थितमेतन्नित्यः कर्ता नास्तीति । यदि नित्यः कर्ता जगतो न कारणं, किमस्य तर्हि कारणम्?

सत्त्वानां शुभकर्मणः जगतः कारणत्वसमर्थनम्

सत्त्वानां शुभाशुभाख्यं कर्म । यथोक्तम् -

सत्त्वलोकमथ भाजनलोकं चित्तमेव रचयत्यतिचित्रम् । कर्मजं हि जगदुक्तमशेषं कर्म चित्तमवधूय न चास्ति ॥ इति ॥

वैभाषिकमाश्रित्य पुनर्भगवता सर्वज्ञेन चोक्तम् -

'ाकाशं द्वौ निरोधौ च नित्यं त्रयमसंस्कृतम् । संस्कृतं क्षणिकं सर्वमात्मशून्यमकर्तृकम्ऽ ॥ इति ॥

सर्वज्ञसमर्थनं भवपरम्परासमर्थनं च

ननु सर्वज्ञसिद्धौ हि तद्वचनं निदर्शनीकर्तुमुचितम् । सर्वज्ञसिद्धये किं प्रमाणमिति चेत्? उच्यते । यो यः सादरनिरन्तरदीर्घकालाभ्यासकलितचेतोगुणः स सर्वः स्फुटीभावयोग्यः, यथा युवत्याकारः कामिनः पुरुषस्य । यथोक्ताभ्यासकलितचेतोगुणाश्चामी चतुरार्यसत्यविषयाकारा इति स्वभावहेतुः ।

न तावदाश्रयद्वारेण हेतुद्वारेण वासिद्धसम्भावना । सङ्कल्परुढानां चतुरार्यसत्यविषयाकाराणां धर्मिणां चेतोगुणमात्रस्य च हेतोः प्रत्यात्मवेद्यत्वात् । न चैष विरुद्धः, सपक्षे कामिन्याकारे सम्भवात् । न चानैकान्तिकः, अभ्यासेन सहितचेतोगुणस्फुटप्रतिभासयोः कारणकार्ययोः कुम्भकारघटयोरिव सर्वोपसंहारेण प्रत्यक्षानुपलम्भतः कार्यकारणभावसिद्धौ अभ्याससहितचेतोगुणत्वस्य साधनस्य स्फुटप्रतिभासकारणयोग्यतया व्याप्तिसिद्धेः । तथा हि - व्याप्त्यधिकरणे कामातुरवर्तिनि युवत्याकारे सादरनिरन्तरदीर्घकालाभ्याससहितचेतोगुणात्पूर्वमनुपलब्धिः स्फुटाभत्वस्य पश्चादभ्याससंवेदनं,स्फुटाभसंवेदनमिति त्रिविधप्रत्यक्षानुपलम्भसाध्यः कार्यकारणभावः स्फुटप्रतिभासाभ्यास सहितचित्ताकारयोरित्युपपन्ना सर्वोपसंहारवती व्याप्तिः । अतोऽनैकान्तिकत्वाभावातनवद्यो हेतुः ॥

नन्वनेन साधनेन चतुरार्यसत्याकाराणां साक्षात्करणात्चतुरार्यसत्याकारसाक्षत्कारी विवक्षितस्सर्वज्ञः सिध्यति, न त्वविशेषेण सर्वधर्मसाक्षत्कारी, ततस्तत्सिद्धये साधनान्तरमभिधेयम् । उच्यते - यत्प्रमाणसंवादि निश्चितार्थं वचनं, तत्साक्षात्पारम्पर्येण वा तदर्थसाक्षत्कारिज्ञानपूर्वकं, यथा दहनो दाहक इति वचनम्, प्रमाणसंवादि निश्चितार्थ चेदं वचनं, क्षणिकाः सर्वसंस्कारा इति अर्थतः कार्यहेतुः । नास्यासिद्धिः, सर्वधर्मक्षणभङ्गप्रसाधनादस्य वचनस्य सत्यार्थत्वात् । नापि विरुद्धः, सपेक्षे भावात् । न चानैकान्तिकता, वचनमात्रस्य संशयविपर्यासपूर्वकत्वेऽपि प्रमाण संवादि] निश्चितार्थस्य [वचनस्य] साक्षात्पारम्पर्येण वा तदर्थसाक्षात्कारिज्ञानपूर्वकत्वेन प्रत्यक्षानुपलम्भाभ्यामुपलम्भात् । अन्यथा धूमादावपि हेतुत्यागप्रसङ्गादशेषकार्यहेतूच्छेदप्रसङ्गः ॥

# भवपरम्परानिरूपणम्

स्यादेतत् । अनेकभवपरम्परालक्षणेन दीर्घकालेन भाव्यस्य सङ्कल्पारुढस्य स्फुटाभत्वं सम्भाव्यते । भवपरम्परासिद्धये तु किं प्रमाणम्? उच्यते । यच्चित्तं तच्चित्तान्तरं प्रतिसन्धत्ते, यथेदानीन्तनं चित्तम् । चित्तं च मरणकालभावीति स्वभावहेतुः । न चार्हच्चरमचित्तेन व्यभिचारः । तस्यागममात्रप्रतीतत्वान्निः क्लेशचित्तान्तरजननाद्वा । हेतोः क्लेशे सति । विशेषापेक्षणादि त्यनागतभवसिद्धिः । इह

पूर्वजन्माभ्यासात्तपोदानाध्ययनादौ सर्वसत्त्वानामभ्यासे प्रवृत्तिरिति प्रवादः । ततस्तत्सिद्धये प्रमाणमुच्यते - यच्चित्तं तच्चित्तान्तरपूर्वकं यथेदानीन्तनं चित्तम् । चित्तं च जन्मसमयभावीत्यर्थतः कार्यहेतुः ॥वैभाषिकमतनिरूपणम्

ननु तत्त्वसाक्षात्कारणान्मुक्तिः । तत्त्वं चैकमेव, यथोक्तम् -

'मुक्तिस्तु शून्यतादृष्टिस्तदर्थाशेषभावनाऽ इति ।

तत्कथं सर्वज्ञदद्वैतं, बौद्धप्रभेदश्चेति? नैष दोषः । यस्मात्सर्वमेतद्भूतार्थे सत्त्वानवतारयितुं भगवता प्रतिपादितम् । तथा हि वैभाषिकाणां मतम् -

'ाकाशं द्वौ निरोधौ च नित्यं त्रयमसंस्कृतम् । संस्कृतं क्षणिकं सर्वमात्मशून्यमकर्तृकम् ॥ऽइति ॥

सौत्रान्तिकानां मतम्

ज्ञानमेवेदं सर्वं नीलाद्याकारेण प्रतिभासते, न बाह्योऽर्थः, जडस्य प्रकाशायोगात् । यथोक्तम् -

'स्वकारज्ञानजनका दृश्या नेन्द्रियगोचाराःऽ ॥ इति ॥

अलङ्कारेणाप्युक्तम् -

यदि संवेद्यते नीलं कथं बाह्यं तदुच्यते । न चेत्संवेद्यते नीलं कथं बाह्यं तदुच्यते ॥

ननु यदि प्रकाशमानं ज्ञानमेवदं, तदास्ति बाह्योऽर्थ इति कुतः? बाह्यार्थसिद्धिस्तु स्याद्वयतिरेकतः । न हि सर्वत्र सर्वदा नीलादय आकाराः प्रकाशन्ते ।

न चैतत्स्वोपादानमात्रबलभावित्वे सति युज्यते । नियतविषये प्रवृत्त्ययोगात् । तस्मादस्ति किञ्चिदेषां समनन्तरप्रत्ययव्यतिरिक्तं यद्बलेन क्वचित्कदाचित्भवन्तीति शक्यमवसातुम् । स एव बाह्योऽर्थ इति, न पुनरसौ बाह्योऽर्थः अवयवी, गुणादयो धर्माः द्रव्याश्रयिणः पराभिमताः, नवविधं द्रव्यं परमाणावो वेति । तत्र न तावत्गुणादयः, द्रव्यनिषेधेनैव तेषां निषेधात् । न चासति समवायिनि द्रव्ये समवाय इति तद्दुषणमत्र नाद्रियते । द्रव्यं च पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति नवविधम् ।

# आत्माकाशकालदिङ्मनसां निरसनम्

तत्रात्मनिषेधायेदमपि साधनम् - यत्कादाचित्कं ज्ञानं तत्कादाचित्ककारणपूर्वकम्, यथा सौदामिनीज्ञानम् । कादाचित्कं चेदमहंकारज्ञानमित्यर्थतः कार्यहेतुः । नायमसिद्धः अहंकारे धर्मिणि ज्ञानत्वस्य प्रत्यक्षसिद्धत्वात् । नापि कादाचित्कविशेषणमसिद्धम्, सर्वदाहमिति ज्ञानाभावात् । नापि विरुद्धः, सपक्षे दर्शनात् । न चानैकान्तिकः, धूमपावकयोरिव कादाचित्कज्ञानकादाचित्ककारणयोः प्रत्यक्षानुपलम्भाभ्यां व्याप्तिसिद्धेः । कादाचित्कज्ञानस्य चाकादाचित्ककारणादुत्पत्तौ कादाचित्ककारणादनुत्पत्तिप्रसङ्गः । अनियतहेतुकतायां चाहेतुकताप्रसङ्गः, तथाप्यनैकान्तिकत्वे प्रसिद्धधूमादिहेतुरप्यनैकान्तिकः स्यात्, विशेषाभावात् । अपि चाहंकारस्य अकादाचित्ककारणपूर्वकत्वे सदैवोदयप्रसङ्गः । कारणस्य कुर्वद्रूपत्वात्, अकुर्वतश्चोपचारतः कारणत्वात्, कुर्वदकुर्वतोरैक्याभावात् । भावे वा कुर्वतोऽप्यकुर्वद्रूपतापत्तिः, तत्स्वभावत्वात् । किञ्चाहंकारस्य अकादाचित्क कारणादुत्पादे युगपदेवोत्पादप्रसङ्गः, अव्यग्रसामग्रीकत्वात् । नन्वहंकारस्यालम्बनमात्मा न कारणमिति चेन्न । अकारणस्यालम्बनत्वायोगादतिप्रसङ्गादिति ॥

अथ किमाकाशं नाम किञ्चिद्वस्तुभूतमस्ति? उत नास्ति वा? नास्त्येवैतत् । यत्र हि सप्रतिघं द्रव्यमस्ति न तत्राकाशमवकाशं वा ददाति । यत्र नास्ति तत्र तदभावादेवावकाशः सिद्ध इति क्व वाकाशमवकाशं दद्यात्? [यस्मादवकाशप्रदमाकाशं भण्यते] तस्मात्सत्यस्मिन् सर्वदा सर्वथा सर्वत्रावकाशः स्यात् । न चैतदस्ति । तस्मान्नास्त्येवाकाशमिति प्रतीमः । एतच्च वैभाषीकमतपेक्ष्य दूषणमुक्तम् । परैस्त्वाकाशं शब्दगुणकमिष्यते । तच्चैकमिति चेत्समानदेशत्वात्सर्वशब्दानां विभागेन श्रवणं न स्यात् । ततस्सन्निहितदेश इव दूरदेशाभिमतोऽपि शब्दः श्रूयेत । न वान्योऽपीत्येकान्तः । दिक्कालयोश्चैकत्वात्पूर्वापरादिप्रत्ययानुपपत्तिः । एतेन नित्यस्यापि मनसोऽसम्भव एव । तथा हि - युगपज्ज्ञानानुत्पत्त्या मनोऽनुमीयते तद्वादिभिः । अनुभूयन्त एव युगपद्बहूनि ज्ञानानि नर्त्तकीदर्शनादौ । यदि पुनर्मनो [नित्यं] स्यात्तदानीमेतानि ज्ञानानि न युज्यन्ते । तस्मान्नास्त्येव मनोऽपि ॥

# अवयविनिरसनपूर्वकं परमाणुमात्रसमर्थनम्

पृथिव्यादयोऽवशिष्यन्ते । ते चावयविपरमाणुभेदेन द्विधा इष्यन्ते । तत्र योऽवयवी घटादिः परमाणुभिद्वर्यणुकादि क्रमेणारब्धः प्रसिद्धः, तस्य उपलब्धि लक्षणप्राप्तस्यानुपलम्भो बाधक इत्युक्तम् । यद्यवयवी नास्ति कथं तर्ह्ययमेकत्वेन प्रतिभासत इति चेत्-

भागा एव भासन्ते सन्निविष्टास्तथा तथा । तद्वान्नैव पुनः कश्चिन्निर्भागः सम्प्रतीयते ॥

इत्युक्तम् । ननु कोऽयं भागप्रतिभासो नाम? नानादिग्देशावष्टम्भेन सञ्चितः परमाणुप्रतिभास एव । यद्येवं कथंऽप्रतिभासधर्मः स्थौल्यम्ऽ इत्युक्तं धर्मोत्तरेण,तत्राप्ययमेवार्थः अर्थस्य स्वरूपेण नास्ति वेदनम्,ऽभाक्तं स्यादर्थवेदनम्ऽ इति वचनात् । तस्माद्योऽयं नीलादिप्रभासो नानादेशव्यापित्वेनानुभूयते स एव स्थूलप्रतिभास इत्यदोषः येऽपि तदारम्भकाः परमाणवो वैशेषिकाणां, साक्षादध्यक्ष्यगोचरा वैभाषिकाणां दर्शने, स्वस्वाकारसमर्पणप्रवणाः सौत्रान्तिकानां मते, तेऽपि योगाचाराणां दर्शने न सम्भवन्ति । न खल्वेकः परमाणुः प्रसिद्धिमध्यास्ते । तस्याधरोत्तरचतुर्दिक्षु परमाणुमध्यासीनस्य नियमेन षडंशतापत्तेः । यो ह्यस्य स्वभावः पूर्वपरमाणुप्रत्यासन्नः न स एवापरपरमाणुप्रत्यासन्नो घटते । तयोरेकदेशताप्राप्तेः । एवं च स पूर्वपरमाणुसन्निहितस्वभावोऽपरपरमाणुं प्रत्यासीदेद्यदि सोऽपि तत्र स्यात् । असत्यामपि प्रत्यासत्तावाभिमुख्यमात्रेऽप्ययमेव वृत्तान्तः । ततश्च परमाणुमात्रं पिण्डः प्रसक्तः ॥

## योगाचारस्य मतम्

अथवायं विचारः, यदेतत्प्रतिभासमानं तदेकं तावन्न युक्तम्, अनन्तरोक्तविचारात् । नाप्यनेकं, परमाणुशः परमाणोरयोगात् । तथा हि - यद्यसौ सांशः कथं परमाणुः? अथ निरंशः तदा संयुक्ताः परमाणावः सर्वात्मना संयोगात्परस्परमभिन्नदेशाः स्युरिति सर्वः पिण्डः परमाणुमात्रं स्यात्, पर्वतोऽपि क्षितिरपीति । तस्मादवश्यं तयोः स्वभावयोर्भेदोऽभ्युपेतव्यः । यथा चानयोस्तथा

’धरोत्तरदक्षिणोत्तरपरमाणुप्रत्यासन्नानां स्वभाबानां च भेद इति षडंशतैव परमाणोर्न्यायबलादापतति । यदाह -

षट्केन युगपद्योगात्परमाणोः षडांशता । षण्णां समानदेशत्वात्पिण्डः स्यादणुमात्रकः ॥ इति ।

न चैकासिद्धौ अनेकस्यापि सिद्धिरिति न सन्ति परमाणवः । यदि बाह्योऽर्थो नास्ति किं विषयस्तर्ह्ययं प्रतिभासः? प्रतिभासः खल्वेषोऽनादिवितथवासनातः प्रवर्तमानो निरालम्बन एव लक्ष्यते । तथा हि - सति विषये सालम्बनता स्यात् । तेन चावयविना भवितव्यम्, परमाणुप्रचयेन वा । स चायमुभयोऽप्यनन्तरोक्त बाधकप्रमाण [ग्राह] ग्रस्तविग्रहो न व्योमतामरसमतिशेते यथोक्तम् -

[न सन्नावयवी नाम न सन्ति परमाणवः ।] प्रतिभासो निरालम्भः स्वप्नानुभवसन्निभः ॥ इति ॥

## निरालम्बनवादः

स्वप्नज्ञानं निरालम्बनं विदितमेव । न च स्वप्रजाग्रदनुभवयोर्भेदः कश्चिदप्यस्ति । सर्वप्रकारसाधर्म्यदर्शनात् । न चानालम्बनादनवाप्तरूपविशेषं विज्ञानं सालम्बनसम्बन्धमनुभवितुमुत्सहते । यदनालम्बनादविशिष्टं तदनालम्बनम्, यथैकस्मादाकाशकेशदर्शनात्द्वितीयम् [ज्ञानं] अनालम्बनाच्च स्वप्नज्ञानादविशिष्टं विवादास्पदीभूतं जाग्रद्विज्ञानमिति स्वभावहेतुः ॥

विज्ञानस्यस्य साकारत्वनिराकारत्वपक्षभेदः

यदि बाह्योऽर्थो नास्ति किं तर्हि परमार्थसत्? ग्राह्यग्राहकादिकलङ्कानङ्कितं निष्प्रपञ्चविज्ञानमात्रं परमार्थसत् । यथोक्तम् -

’ग्राह्यग्राहकनिर्मुक्तं विज्ञानं परमार्थसत्ऽ इति ।

पुनश्चोक्तम् -

’नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥

’ुक्तं चैतद्भगवता -

’बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते । वासनालुठितं चित्तमर्थाभासं प्रवर्त्तते ॥ऽइति ॥

## साकारवादिनां मतम्

तत्र केचिदेवमाहुः - विज्ञानमेवेदं सर्व सर्वशरीरविषयभावेन प्रसिद्धम्, तच्च स्वसंवेदनमिति न कस्यचित्ग्राह्यं ग्राहकं वा । कल्पनया तु ग्राह्यग्राहकभाव इति व्यवस्थाप्यते । ततः परिकल्पितग्राह्यग्राहकभावरहितं विज्ञानं [साकारं] सत्यमिति ।

## निराकारवादिनां मतम्

अन्ये तु सकलाकारकलङ्कानङ्कितं शुद्धस्फटिकसंकाशं वास्तवं विज्ञानम् । आकारास्त्वमी वितथा एवाविद्यया दर्शिताः प्रकाशन्ते । तस्मात्ग्राह्यं नाम नास्त्येव ग्राह्याभावात्तदपेक्षया यद्ग्राहकत्वं विज्ञानस्य तदपि नास्तीति । माध्यमिकानां तु दर्शने तदपि विज्ञानं न परमार्थसत्, विचारासहत्वात् । स्वभावेन हि युक्तं पारमार्थिक मुच्यते लोके । न चास्य विचारतः कश्चित्स्वभावो घटते, एको वानेको वा, पूर्वविचारासहत्वात् । यथोक्तम् -ऽनेष्टं तदपि धीराणा विज्ञानं पारमार्थिकम् । एकानेकस्वभावेन वियोगाद्गनाब्जवत्ऽ ॥ इति ॥

कीर्तिपादैरप्युक्तम् -

'भावा येन निरुप्यन्ते तद्रूपं नास्ति तत्त्वतः । यस्मादेकमनेकं वा रूपं तेषु न विद्यतेऽ ॥ इति ॥

तथालङ्कारकारेणाप्युक्तम् -

'यदा तु न विकल्पस्य न चान्यस्य प्रमाणता । तदा विशीर्यमाणेऽपि सर्वस्मिन् कोऽपराध्यतु ॥ 'बद्धमुक्तादि भेदोऽपि नैवास्ति परमार्थतः । भेदो हि नावभात्येव सर्वत्र समदर्शिनाम्ऽ ॥िति ॥

प्रयोगः पुनरेवम् - यदेकानेकस्वभावं न भवति न तत्परमार्थसत्, यथा व्योमकमलम्,एकानेकस्वभावं च न भवति विज्ञानमिति व्यापकानुपलब्धिः । न तावदयमसिद्धो हेतुः । साकारे ज्ञाने बहिरर्थ इव एकानेस्वभावायोग्यत्वस्य परिस्फुटत्वात् । यत्र हि लोकस्य बाह्यार्थव्यवहारस्तदेव साकारवादिनो ज्ञानम्, ततो यत्तस्य बहिर्भावे बाधकं तदेवान्तर्भावेऽपि बाधकम् । न हि स्थूलमेकमनेकं च परमाणुरूपमपीष्यते । विज्ञानात्मकानामयमाकारो यद्येकः स्थूलो यति वानेकः परमाणुशो भिन्नः, उभयथापि बाह्यार्थपक्षभावि दूषणमशक्यमुर्द्धतुम् । न हि तद्विज्ञाने बहिर्भावनिबन्धनं दूषणम्! येन तद्भावेन भवेत् । मूर्तिनिमित्तं बाधकम्,

नामूर्ते विज्ञानात्मनि इत्यपि निस्सारम् । साकारतायां विज्ञानस्यापि मूर्तत्वात् । अयमेव हि देशावितानवा [नाकारो] मूर्तिरिति ॥ श्रीमन्महाजगद्दलविहारीय महापण्डित भिक्षुमोक्षाकरगुप्तविरचितायां तर्कभाषायं परार्थानुमानपरिच्छेदः तृतीयः समाप्तः ॥

ग्रन्थाग्रं श्लोकमानं ८४०

तर्कभाषामिमां कृत्वा पुण्यमासादि यन्मया । तेन युण्येन लोकोऽयं बुद्धत्वमधिगच्छतु ॥

- यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।

यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ उदकानलचौरेभ्यः मूर्खकेभ्यस्तथैव च । कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥*

## तर्कभाषा समाप्ता